श्रीः ।

कविराजपण्डितविरचितं

# राघवपाण्डवीयम् ।

सारचन्द्रिकया टीकयासमेम् ।

---

## प्रथमः सर्गः ।

स्वाधिष्ठानाम्बुजरजःपुञ्जपिञ्जरमूर्त्तये ॥
इच्छाधीनजगत्सृष्टिकर्मणे ब्रह्मणे नमः ॥ १ ॥

हरिः ॐ

पाणिनये गौतमये जैमिनयेऽनन्तबादरायणये ॥
सर्वस्वं निजमेकं सद्विद्यातीर्थमुत्तमश्लोकम् ॥ १ ॥
भास्वद्ब्रह्मज्ञानिवंशावतंसः श्रीमद्रोजादत्तसूरिप्रसूतः ॥
हृद्यो विद्यालक्ष्मणस्य प्रयासो विश्वेशस्य प्रीतये शश्वदस्तु २
परमात्मानमानम्य श्रीनारायणभारते ॥
आवश्यकपदान्येव विवरीतुं यतामहे ॥ ३ ॥
अत्रोधध्वान्तसंपन्नश्लेषाशयविशुद्धये ॥
इयं सद्भिरुपादेया सततं सारचन्द्रिका ॥ ४ ॥

स्वाधिष्ठानेति । अधिष्ठीयत । इत्यधिष्ठनमासनं । अधिष्ठानमासनम् । 'अधिष्ठानं चक्रपुरप्रभावाध्यासनेष्वपी'त्यमरः । रजसा परागेण पिञ्जरेतीतरशिल्पिसाम्यम् । इच्छेति तद्वैलक्षण्यम् । कर्मपदोपानेनैव शिल्पतावगमान्नाधिकपदत्वम् । व्यतिरेकालंकारध्वनिः । तेन संकल्पमात्रसामग्रीकविश्वसृजं नमस्यता मयापि तन्मात्रसामग्रीका काव्यसृष्टिः सुकरेति व्यज्यत इति प्राञ्चः। वस्तुतस्तु संसारानर्थनिवृत्तिरूप महामोहमहिम्ना चेतना-

पुनातु वः सरस्वत्या विलासशिशुकः शुकः ॥
तलांशुमणिमाणिक्यपञ्जरान्तरगोचर. ॥ २ ॥
ब्रह्माण्डमण्डपच्छन्नपद्मकुड्मलदीर्धिका ॥
जायतां जगतां शान्त्यै शाम्भवी शक्तिरेकला ॥ ३ ॥

चेतननानाप्रपञ्चात्मनावभासमानमखण्डानन्दात्मतत्त्वमेवात्र नन्तव्यत्वेनोपन्यस्तमिति मन्तव्यम् । तथाहि स्वस्य आत्मनः अधिष्ठानं पुरं शरीरं तत्राम्बुजं हृदयकमलं 'ब्रह्मपुरे दहरं पुण्डरीक'मितिश्रुतेः । तत्र रजःपुञ्जेन सूक्ष्मसमुदायेन लिङ्गशरीरेण पिञ्जरः रलयोरेकत्वस्मरणात् पिञ्जला भृशमाकुला मूर्तिः स्वरूपं यस्य 'समौ पिञ्जरपिञ्जलौ । भृशमाकुले'त्यमरः ॥ देहद्वयतादात्म्यापन्नो हि चिदात्मतद्धर्मान्नात्मन्यतिमन्यमानो व्याकुल इव लक्ष्यते । अनेन तत्त्वमस्यादिवाक्यगतो त्वंपदार्थश्चिन्मात्रोपलक्षितः । 'योयं विज्ञायमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष' इति श्रुतेः । इच्छेत्यादिना संकल्पमात्रमूर्तिभूतभौतिकप्रपञ्चाभिन्ननिमित्तोपादानतोपलक्षितः शुद्धस्तत्पदार्थो दर्शितः तयोरौपाधिकभेदस्य वस्तुतोभावादर्थसिद्धमभेदं सामानाधिकरण्येन प्रदर्श्य ब्रह्मण इत्यनेन त्रिविधपरिच्छिन्नशून्यं तत्त्वमस्यादिवाक्यतात्पर्यगम्यमखण्डानन्दरूपं वस्तूपदिष्टम् । 'स एव वा एष महानज आत्मा अमरोजरोमृतोभयो ब्रह्मे'तिश्रुतेः । नम इति तु द्वैतस्य तत्तदन्यत्वात्काल्पनिको नन्तृनम्यभाव इति सिद्धान्तरहस्यं प्रदर्शितम् न केवलं कविसृष्टेरेव बाह्योपादानाद्यपेक्षा अपि तु वियदादिसृष्टेरपि 'वाचारम्भणं विकारो नामधेय'मितिश्रुतेरिति ॥ १ ॥

पुनात्विति । शिशुरिवानुकम्प्यः शिशुकः । अनुकम्पायां कन् । तलं हस्ततलम् ॥ २ ॥

'ब्रह्म शान्तिः शर्मापि कल्याण'इति विश्वः । शाम्भवी शक्तिः

श्रीलतालिङ्गिताङ्गस्य विष्णुकल्पद्रुमस्य वः ॥
अवतारमहाशाखाः पुष्णन्तु फलमीप्सितम् ॥ ४ ॥
कान्तिः श्रीकण्ठकण्ठस्य जयत्यालिङ्गनोत्सुका ॥
स्कन्धारूढेव कालिन्दी मौलिमन्दाकिनीर्ष्यया ॥ ५ ॥
स वः करोतु विघ्नानां वारणं वारणाननः ॥
मदवारिभिरारब्धभोगावलिरिवालिभिः ॥ ६ ॥
जगत्प्रदीपयोर्वंशौ सूर्यचन्द्रमसोरपि ॥
ययोरुद्दीपितौ वाग्भिस्तौ वन्दे कविपुङ्गवौ ॥ ७ ॥
अन्यो विधाता वाल्मीकिरादिकाव्यं कमण्डलुः ॥
रघुनाथकथागङ्गा तया पूता जगत्त्रयी ॥ ८ ॥
द्वैपायनोपरो ब्रह्मा तत्सृष्टिर्भारतार्णवः ॥
सूक्तयो दिव्यरत्नानि त्रैलोक्यं तैरलंकृतम् ॥ ९ ॥
निश्रेण्यौ ब्रह्मलोकस्य वाग्देव्याः कर्णकुण्डले ॥
धर्मद्रुममहामूले वाल्मीकिव्यासयोः कृती ॥ १० ॥
भारतादिपुराणानि श्रीरामचरितानि च ॥
त्रिसंध्यसवनान्येष सर्वसाधारणो मखः ॥ ११ ॥

इष्टभवानी । 'एकल एकपर्याय' इति त्रिकाण्डशेषः । एकं एकत्वं लाति अद्वितीया एकारबीजरूपमंत्रं कलयतीति वा ॥ ३ ॥

श्रीलतेति । लतावेष्टितकालिङ्गनध्वनिः ॥ ४ ॥

स वः । 'भोगावलिः स्तुतिपाठ' इति हारावली ॥ ५ ॥ ६ ॥

जगदिति । तौ वाल्मीकिव्यासौ ॥ ७ ॥

अन्यः द्वितीयः । आदिकाव्यं रामायणम् । गङ्गेति । तस्याः ब्रह्मकमण्डलुस्थत्वात् ॥ ८ ॥ ९ ॥ १० ॥

भारतेति । आदिपर्वाद्यभिप्रायेण बहुवचनम् । यद्यपि रामकाव्यत्वेन रामायणस्य प्राथम्यमुचितं तथापि प्रातर्भारतं म-

पुराणरामायणभारतादिक्षीराणि संयोजितभक्तिवत्सैः ॥
पुरातनैर्या दुदुहे कवीन्द्रैः सा भारती कामदुघा ममास्तु १२

अस्ति कादम्बसन्तानसन्तानकनवाङ्कुरः ॥
कामदेवः क्षमादेवः कामधेनुर्जनेश्वरः ॥ १३ ॥

कामः पुरातनो येन नूतनेनाभिभूयते ॥
भार्गवो राघवेणेव रामो रामेण सङ्गरे ॥ १४ ॥

दत्तयः कीर्त्तयश्चैव यदीयाः कर्णसङ्गताः ॥
कान्ताभ्यश्च कविभ्यश्च कामदं यस्य दर्शनम् ॥ १५ ॥

दधानोपि धनुर्विद्यावैशारद्यं किरीटिवत् ॥
अङ्गनापाङ्गबाणानां नैवायं याति लक्ष्यताम् ॥ १६ ॥

यद्यशोराजहंसस्य ब्रह्माण्डं पञ्जरायते ॥
ग्रासः क्षीरायते चास्य पुरस्तात्क्षीरवारिधिः ॥ १७ ॥

ध्याह्ने विष्णुपुराणं अपराह्ने रामायणं श्रूयतां इति औचित्येन तथोक्तमित्याह । 'सोमनिर्दलने स्नाने क्षीरं सवनमध्वर' इति विश्वः । यागान्तराणां त्रैवर्णिकाधिकारित्वाद्बृहस्पतिसवादीनां च ब्राह्मणाद्यधिकारित्वान्नियतकालत्वाच्च तद्विलक्षणः ॥११॥१२॥

अस्ति कादम्बसन्तानः सद्गुरुवहुवंशः स एव संतानकः सुरद्रुमः । 'कादम्बमाहुः संताने नीपेर्जुनकुटुम्बक' इतिविश्वः । 'द्विजात्यग्रजन्मभूदेववाडवा' इत्यमरः । क्षमया क्षान्त्या दीव्यति-विजिगीषन्निति वा ॥ १३ ॥

कामः कन्दर्पः ॥ १४ ॥

दत्तदानानि राधेयवत् । कीर्त्तयः सर्वलोकविश्रुताः । 'इच्छामनोभवौ कामा' वित्यमरः ॥ १५ ॥

दधानेति । वैशारद्यं नैपुण्यं किरीटी अर्जुनः ॥१६॥१७॥

श्रीविद्याशोभिनो यस्य श्रीमुञ्जादियतीभिदाम् ॥
धारायति रसावासादयं तु च धरापतिः ॥ १८ ॥
धर्मार्थकामान्भजता यथावदनुजीविनः ॥
अवन्ध्या येन नीयन्ते रुज्जनाँ इव वासराः ॥ १९ ॥
दूषणध्वंसदक्षेण पुण्यसेतुप्रवर्त्तिना ॥
रामेणेव कृतं येन जनस्थानमकण्टकम् ॥ २० ॥
भूरिक्षमाभारभृता विजयार्जितसंपदा ॥
भूमेरुत्खातशल्येन यस्तुल्यो धर्मजन्मना ॥२१॥

आदित्यस्यान्ववायो जयति रघुपतेर्जन्मनोजृम्भणश्री-
स्तत्साम्यं सोमवंशः श्रयति सुरभितः पाण्डवानां यशोभिः॥
धत्ते तत्प्रौढिमद्य स्मरहरधरणीसंभवोऽप्यन्ववायो
यस्यालङ्कारभावं भजति कृतधियां कामदः कामदेवः २२

श्रीविद्येति लक्ष्मीसरस्वत्यौ आगमप्रसिद्धा वा श्रीविद्या मुञ्जो राजविशेषः ॥ भिदा वैलक्षण्यं । धारा तन्नगरी । 'धारा सेनाग्रिमस्कन्धरुन्तरयोः पत्तनान्तरे । द्रवद्रव्यप्रपातेपि तुरङ्गगतिपञ्चके इति विश्वः ॥ १८ ॥

धर्मेति । अनुबन्धिनः परस्पराविरुद्धान् ॥ १९ ॥

दूषणेति ! दोषो रक्षोविशेषश्च । पुण्यस्य सेतुः प्रबन्धो मनोज्ञः आलिश्च जनस्थाने जनपदः क्षेत्रविशेषश्च 'पुण्यं त्रिषु मनोज्ञं स्यात् क्लीवं सुकृतधर्मयोः । रोमाञ्चे क्षुद्रशत्रौ च द्रुमाङ्गे कण्टकोस्त्रिया'मिति विश्वः । 'सेतुरालौ स्त्रियां पुमानि'त्यमरः ॥ २० ॥

भूरिति । 'क्षितिक्षान्त्योः क्षमा मते'त्यमरः। 'विजयः स्याजये पार्थे'इति मेदिनी । शल्यं पापं शल्यो मद्राधिपश्च । पापं तु पातकम् ॥ 'शल्यं तूस्तं च कल्पश्चे'ति त्रिकाण्डशेषः। धर्मजन्मना युधिष्ठिरेण ॥ २१ ॥

केचिद्दानेषु वीराः समरभुवि पुनः केचिदन्ये दयायां
कर्णाद्याः पार्थमुख्याः खचरपतिमुखाः पूर्वमासन्युगेषु ॥
तेषां तेषां च तेषामपि वहति धुरं साम्प्रतं तावदस्या-
मेकः श्रीकामनामा जलनिधिलहरीस्रग्धरायां धरायाम् २३
आनेता मध्यदेशात्प्रवचनविदुषां सोमपाब्राह्मणाना-
मारोढा मर्त्यमूर्त्या सुरपतिसदसां मण्डनं मानवत्याः ॥
भूमेर्जेता जयन्तीपुरपुरमथनश्रीपदाम्भोजभृङ्गः
सोपि क्ष्मापस्त्रिनेत्रः स्वकुलकुलगिरिं योतुलेभे तपोभिः २४
न्यञ्चत्काञ्चीमनोज्ञाः सुललितमधुराः कुन्तलैरुल्लसन्त्यः
पुष्णन्त्यो हारशोभां श्रितकरकटकाः कान्तिमद्वेदिमध्याः ॥

आदित्यस्येति सुरभितः ख्यात तयोर्वंशयोः प्रौढिः । स्मरहरस्य शिवस्य धरणी अवन्ती नगरीविशेषो वा । कृतधियां पण्डितानाम् । अत्र तत्प्रौढिमद्धेत्यत्र मन्त्रेति (?) संभवोप्यन्ववाय इत्यत्रान्वयोयमितिपाठित्वाऽश्लीलकथितपददोषौ परिहर्त्तव्यौ २२

केचिदिति । खचरपतिर्जीमूतवाहनः । विद्याधरः कामरूपी 'खेचरः स्थिरयौवन'इति त्रिकाण्डशेषः । कर्णादयो यथाक्रमं दानादिशूराः २३ ॥

आनेता । 'कुरुक्षेत्रं प्रयागं च हिमाद्रिं विन्ध्यमन्तरा । मध्यदेश' इति त्रिकाण्डशेषः । 'अथ प्रवचनं वेदे प्रकृष्टवचनेपि चे'ति मेदिनी । मर्त्यमूर्त्या मनुष्यदेहेनेन्द्रसभामारोढुमर्हः । 'अर्हे कृत्यतृचश्चे'ति तृच् । मानवत्याः नगरीविशेषस्य जयन्तीपुरस्थस्य शिवस्यार्चकः । त्रिनेत्र इति । प्रज्ञा हि तृतीयचक्षुः चक्षुरिन्द्रियं श्रुतिस्मृती चेति वा त्रीणि नेत्राण्यस्य ॥ २४ ॥

न्यञ्चदिति । काञ्ची रशना देशविशेषश्च । 'काञ्ची स्यान्मेखलादाम्नि गुञ्जायां नीवृदन्तरे' इति विश्वः ॥ शोभनेन ल-

अङ्गश्रीभङ्गिभाजः परिमलदलकाः प्रोल्लसत्कामरूपाः ॥
सेवन्ते यं समन्तादनुदिनमबलाश्रेणयः क्षोणयश्च ॥२५॥

कूर्माकारं चरणयुगलं धूतदिग्दन्तिशुण्डा-
दण्डावूरू भुजयुगमपि व्यक्तनागेन्द्रशोभम् ॥
प्रायः पृथ्वीधरणविधये तत्समर्थान्पदार्था-
नेकीकृत्य त्रिभुवनसृजा निर्मिता यस्य मूर्तिः ॥२६॥

लितेन 'सकुमारोधिविन्यासो मसृणो ललितं भवेदि'ति रसकलिकोक्तेन हावविशेषेण माधुर्यवत्यः सुललिताः कोमलाश्च ताः मधुराश्चेति देशपक्षे मधुरा मथुरापुरीति शब्दभेदः । कुन्तलाः केशाः देशविशेषाश्च । हारो मुक्तावली । हरस्यायं हारो वाराणसीदेशो मुद्वहेति(?)च । 'हारो मुक्तावलौ युद्ध'इति विश्वः। पुष्णन्त्यो दधानाः धृतनिकरेषु वलयानि यामिर्धृताकारो येषु ते कटका गिरिनितम्बा यासु ताश्च 'बलिहस्तांशवः कराः । कटकं वलये सानौ राजधानीनितम्बयोरि'ति विश्वः। कान्तिः शोभातिशयस्तद्युक्तं वेदिवद्विलग्नं मध्यं अन्तर्वेदियुक्तमध्यदेशश्च यासां । 'मन्मथेनार्पितच्छाया सैव कान्तिरिति स्मृता' । अङ्गान्यवयवा अङ्गा देशविशेषाश्च । श्रीर्वेषः संपच्च। भङ्गिश्चातुर्यं रचनाविशेषश्च । अलकाश्चूर्णकुन्तला अलका कुबेरपुरी च । उद्यत्कामानि रूपाणि विलसत्कामरूपो देशविशेषश्च 'वेदिः क्रिमिविशेषे स्याद्देशे संस्कृतभूतले । अङ्गं गात्रान्तिकोपायप्रतीकेष्वप्रधानके'इति । 'अङ्गा देशविशेषाः स्युरङ्ग संबोधनेऽव्यय'मिति । 'श्रीर्वेषरशनाशोभाभारतीसरलद्रुमे । लक्ष्म्यां त्रिवर्गसंपत्तौ वेषोपकरणे मतामि'ति विश्वः ॥ २५ ॥

कूर्मो नागेन्द्राविशेषः । 'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येव-

कस्त्राता कामदेवः समरविजयिनां कोऽग्रणीः कामदेवः
कस्त्यागी कामदेवः सरसकविगिरां कः पदं कामदेवः ॥
कः सेव्यः कामदेवः श्रितभरणविधौ कः कृती कामदेव.
प्रश्नानामेवमेषां प्रतिभवनमहो रामवत्कामदेवः ॥ २७ ॥
जित्वा शत्रून्स्वमभिविशतो धामहर्म्याग्रलग्ना-
भात्रोद्वेदाकुलितगतयो लोलमानायताक्ष्यः ॥
प्रातः प्रेङ्खच्छफरकनकस्तम्भशोभैर्निजाङ्गैः
सीमन्तिन्यो विदधति दृढं यस्य मीनध्वजत्वम् ॥ २८ ॥
योषावेषो विपधरगृहं केशमोक्षोऽम्बुगर्भः
शष्पग्रासः शबरशिबिरं शम्बरस्त्वङ्निचोलः ॥
पाणौ शाखाकवलनविधिर्धारणं कण्ठदाम्नां
यच्छत्रूणां भवति भवने जीवनोपायवर्गः ॥ २९ ॥
विशिष्टगीताधृतवंशदीप्तिः श्रुतिप्रतिष्ठा पुरुषार्थसूतिः ॥
सन्मार्गविस्तारवती सुजातिर्यं भारतश्रीर्भजतेभिरामा ३०

( अर्थत्रयवाचीश्लोकोऽयम् )

छत्रचन्द्रमसि यस्य निर्मले लोकतामपहर्त्तुमुद्यते ॥
कुड्मला भवति वैरिभूभृतामातपत्रशतपत्रसंहतिः ॥ ३१ ॥

मादिभिः उपमा व्यज्यते शब्दैरिव शब्दोपि तादृश' इति दण्डी । तत्समर्थान्भूधारणोचितान् ॥ २६ ॥ २७ ॥

जित्वा । हर्म्याग्रलग्नाः कामिन्यः स्वलोचनमीनदण्डभूतैः स्वाङ्ग-सौन्दर्येण व्यपदिश्यमानं मकरध्वजत्वमन्वर्थयन्तीत्यर्थः ॥ २८ ॥

योषा स्त्रीवेषेण पातालावस्थानशिरोमुण्डनजलाशिरप्रवेशा-स्येतृणधारणपुलिन्दाश्रयमृगचर्मपरिधानमुखाङ्गुलिदानकण्ठवस्त्र-वेष्टनान्येव यच्छत्रूणां जीवनोपाय इत्यर्थः ॥ २९ ॥

विशिष्टेति । देवादिभिर्गीता तेषामपि स्पृहणीया धृतवंशे-

भृग्वादिगोत्रे दीप्तिः प्रकाशो यथाश्रुतेर्वेदस्य प्रतिष्ठा तदुक्तम् । यागादिकर्मभूमित्वात् पुरुषार्थानां धर्मादीनां सूतिः जनयित्री सतां मार्गाणां शैववैष्णवाद्यागमोक्तानां विस्तारप्रचारस्तद्वती शोभना । जातयो ब्राह्मणादयोऽस्यां अभिरामा मनोज्ञा । भारतस्य भरतवर्षस्य जम्बूद्वीपस्य वा श्रीः संपत् यं भजते । 'पुंसि वंशः कुले वेणौ पृष्ठावयववर्गयोः । मार्गे मृगमदे प्रासप्रभेदेन्वेषणाध्वनि' इति च मेदिनी ॥ श्रुतिः श्रोत्रे च तत्कर्मण्याम्नायावर्त्तयोरपी'ति विश्वः 'जातिश्छंदसि समान्ये मालत्यां गोत्रजन्मनोः' ॥ 'व्यासर्षिभापिते ग्रन्थे जम्बूद्वीपे च भारत'मिति च ॥ १ ॥ भेषु नक्षत्रेषु रतो भरतः सूर्यः उपचारात्तद्वंशोऽपि तमधिकृत्य कृतो ग्रन्थो भारतं रामायणमिति यावत् ॥ तस्य श्रीः विः पक्षी क्रौञ्चस्तेन शिष्टः प्रवर्त्तितो वाल्मीकिस्तेन गतिं व्याधविद्धं च क्रौञ्चमनुशोचतो मुनेर्मुखाद् 'मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः' इत्यादिश्लोकमयी वाक् निर्गता ततस्तेन रामायणं कृतं ओः शिवस्यांशो रुद्रावतारो हनूमान् धृता तस्य दीप्तिः तेजस्तत्कृतं लङ्कादाहो वा श्रुतौ प्रतिष्ठास्थितिर्यस्याः सा श्रूयमाणा सती पुरुषाणां सुष्ठु ऊतिः ॥ 'ऊतिः स्त्रीरक्षणे वूता'विति मेदिनी ॥ आरण्याः पशवो मृगा तेषां समूहो मार्गः तद्विस्तारवती सुष्ठु अतिशयेन गर्भवासं विना जाता सुजा सीता सैव अतिगतिः पातिव्रत्यस्थितिर्यस्याम् । 'इणजादिभ्य'इत्यततेरिण् अभिगतो रामोऽस्यां अभिरामा ॥ 'प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोप'इति समासः ॥ २ ॥ तथा भरतस्य व्यासकृतेतिहासस्य श्रीः गीता भगवद्गीता दशानां सोमादिसन्तानानां दीप्तिः उद्योगश्रुतिर्वेदस्तस्यैव प्रतिष्ठा गौरवं यस्याः 'एकतश्चतुरो वेदा महाभारतमेकत'इत्युक्तेः ॥ प्रतिष्ठा गौरवे क्षि-

तावि'ति विश्वः ॥ पुरुषैरर्थ्यमानानां प्रयोजनानां वस्तूनां च शोभना ऊतिर्ग्रथना 'यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्' इत्युक्तेः । सतां सुधियां मार्गविस्तारवतीं युधिरिति प्रदर्शकत्वात् । जातकच्छन्दोविशेषी । अभिभयशून्यं यथा स्यात्तथा । 'रमन्तेस्यामिति रामा । अयं श्लोकोर्थत्रयवाची प्रसिद्धश्च । इह श्लोकेन्येप्यर्थाः प्रतीयमानाः क्लिष्टत्वादप्रसिद्धेश्चोपेक्षिता यथासम्भवं सुधीभिरुन्नेयाः । भरतेन मुनिना प्रोक्तं भारतं सङ्गीतशास्त्रं तत्र 'रञ्जकः स्वरसन्दर्भो गीतमित्यभिधीयते' । वंशादीनि वाद्यानि श्रुतिर्द्वाविंशतिविधा पुरुषार्थस्य परप्रयोजनसूतिः 'वीणावादनतत्वज्ञ' इत्यादिस्मृतेः 'गीतं वाद्यं तथा नृत्यं त्रयं सङ्गीतमुच्यते । मार्गोदसीति तद्द्वेधा तत्र मार्गः स उच्यते । यो मार्गितो विरञ्चाद्यैः प्रत्युक्तोभरतादिभिः देवस्य पुरतः शम्भोर्नियताभ्युदयप्रद ' इतिरत्नाकरः ॥ तथा ' शुद्धा स्युर्जातयः सप्त ताः षड्जादिस्वराभिधा ' इत्युपक्रम्य ' ब्रह्मप्रोक्तैः पदैः सम्यक् प्रयुक्ताः शङ्करस्तुतौ । अपि ब्रह्महणं पापं जातयः प्रपुनन्त्यमू'रित्यादि १ । अथ भारं तस्यत्युत्क्षिपतीति भारतः कृष्णः । तस्यतेर्डः ॥ विषु पक्षिषु शिष्टः श्रेष्ठो गरुडः ' विविष्किरपतत्रय ' इत्यमरः । वंशो वंशी गोपालवाद्यविशेष; श्रुतिप्रतिष्ठा वेदकर्तृत्वात्॥'शास्त्रयोनित्वादि'तिन्यायात् । पुरुषस्य परमात्मनः अर्थे दुष्टदैत्यादिसंहाररूपे सूतिरुत्पत्तिर्यस्याम् । मार्गः कस्तूरिका । जातयः मालतीपुष्पाणि पद्मिन्याद्याः स्त्रीजातयो वा अभिगताःपरितोवर्त्तमानाः रामाः गोप्यो यस्याम् २ । भानि नक्षत्राणि । इयर्त्ति गच्छतीति विशिष्टगीपार्वती तां तया वा इता प्राप्ता गापोष्टक् । अधृतवंशदीप्तिरलक्षजन्मत्वात् । श्रुतिप्रतिष्ठादिवदेकवेद्यत्वात् पुरुषस्य विष्णोरर्थप्रसूतिः वज्र-

औदार्ये रघुनाथधर्मसुतयोस्तत्सोदराणां पुनः
सौभ्रात्रे पतिदेवताव्रतविधौ पृथ्वीसुताकृष्णयोः ॥
श्रीरामायणभारताम्बुधिकृतेष्वाख्यानरत्नेषु च
श्रेयान्संप्रति कामदेवनृपतिः कौतूहली वर्त्तते ॥ ३२ ॥
ज्ञानं जृम्भयति श्रियं विशदयत्यानन्दमुद्दीपय-
त्याधत्ते मतिपाटवं वितनुते वाचां समीचीनताम् ॥
प्रत्यक्षी कुरुते पदार्थनिवहं ख्यातिं प्रतिष्ठापय-
त्यन्यः को नृपतेर्विनोदविभवः सत्सूक्तिगोष्ठीरसात् ३३
तस्यावदातैः कविसूक्तिसूत्रैः संस्यूतनानागुणरत्नराशेः ॥
विनोदहेतोः कविराजसूरिर्निबन्धनं द्वन्द्वमिदं विधत्ते ३४
श्रीरामायणमाणिक्यं भारतस्वर्णमुद्रितम् ॥
न कस्य कुरुते लोके विस्मयोल्लासिमानसम् ॥३५॥

साम्बपुत्रादिप्रदत्वात् सन्मार्गो यज्ञमृगसम्बन्धी विस्तारो व्याधरूपेणानुधावनं यस्याः ॥ शोभना जातिर्जन्म यया तदभक्तजन्मनो निन्द्यत्वात् ॥ अधिगतो रामो जामदग्न्यः प्रियशिष्यो यामभिरामाम् ॥ ३ ॥ एवं भरतस्य गोत्रापत्यं भारतो युधिष्ठिरः ४ भरता नटास्तेषामियम् ॥ ५ ॥ भा प्रभास्तं च तपःश्रीरिति दिक् ॥ ३० ॥

छत्रा एतच्छत्रोदयसमकालमेवान्येषां च्छत्रशून्यता जातेति भावः ॥ ३१ ॥

औदार्येति । सर्वेषु तेषु कौतुहलीत्यनुषङ्गः । रामदीनामौदार्यादिविषयकग्रन्थश्रवण इत्यर्थः ॥ ३३ ॥

ज्ञानवियोगस्योद्वेगापनयस्य विभवो निर्वर्त्तकोन्यः । न कोपि गोष्ठ्यां सभायां संलापे । रसो गन्धरसस्वादुतिक्तादौ विषरागयोः । विभवो निर्वृतौ घने इति विश्वः ॥ ३४ ॥ ३५ ॥

इयं परिभाषा ।

प्रायः प्रकरणैक्येन विशेषणविशेष्ययोः ॥
परिवृत्या क्वचित्तद्वदुपमानोपमेययोः ॥ ३६ ॥
क्वचित्पदैश्च नानार्थैः क्वचिद्वक्रोक्तिभङ्गिभिः ॥
विधास्यते मया काव्यं श्रीरामायणभारतम् ॥ ३७॥
पदमेकमपि श्लिष्टं वक्तुं भूयान्परिश्रमः ॥
कथाद्वयैक्यविर्वोढुः किं धाराधारिणोधिकम् ॥ ३८॥
श्रीमद्रायणं गङ्गा भारतं सागरो महान् ।
तत्संयोजनकार्यज्ञो कविराजभगीरथौ ॥ ३९ ॥
सुबन्धुर्बाणभट्टश्च कविराज इतित्रयम् ॥
वक्रोक्तिमार्गनिपुणाश्चतुर्थो विद्यते न वा ॥ ४० ॥

प्रायः क्वचित् युग्मं प्रकरणैक्येन यथा अर्थानुरूपेण जनेन गुप्तत्यादिविशेषणादिपरिवृत्या यथा दशरथो बभूव यशोभिः पाण्डु अथ च पाण्डुर्बभूव क्रमन् दिशो दशेति उपमानादिपरिवृत्या यथा तस्य रामस्य लक्ष्मीविपक्षेण कचेषु कृष्णा लक्ष्मीरिव ॥ ३६ ॥

नानार्थैः पदैः हरिशब्दादिभिः वक्रोक्तिभङ्गिभिः यथा कर्णनासापनोदोयं स्त्रीणां यदवमानने'ति । अत्र शूर्पणखापक्षे कर्णनासापनोद एव स्त्रीणामवमानता ॥ उर्वशीपक्षे तु स्त्रीणामवमाननैव कर्णनासापनोदवति भङ्गिभिश्च तद्दत्ताक्षरादिभिः यथा गारवर्णेत्यत्र पक्षे वकारस्थानोपकारदानेनेति कश्चित् ॥ ३७ ॥

पदं वाक्यम् एक वाक्योक्तिः तन्निर्वोढुः कामं देवोक्तितोधिकम् । किं तत् श्लेषलक्षणं सरस्वतीकण्ठाभरणे एकरूपेण वाक्येन द्वयोः क्षपणार्थयोः । तन्त्रेण यत्र काव्यज्ञैः श्लेष इत्यभिशब्दित इति ॥ ३९ ॥ ४० ॥

रम्यं रामायणं चैव भारती सैव भारतम् ।
अर्धनारीश्वरमयी मूर्तिरेकैव साभवत् ॥ ४१ ॥
एकत्र चन्द्रातपसुन्दरस्य पार्श्वे परस्मिन्स्फुरदुष्णभासः ॥
अयं सुमेरोरनुयाति लीलां कथाद्वयाश्चर्यपदप्रबन्धः ॥४२॥
मनोज्ञरामायणभारताख्य-
भागीरथीसागरसन्निपाते ॥
सन्तः प्रकुर्वन्त्वथ गाहलीला-
मस्मिन्नवच्छेदनिकाव्यतीर्थे ॥ ४३ ॥
विस्तारिताగాब्धिपुरीवनान्तां
सन्दर्शितेन्द्वर्कदिनर्तुशोभाम् ॥
सृष्टिं कविः सूक्तिमयीं वितन्वन्
प्रजापतेः किं न समानयत्नः ॥ ४४ ॥

रम्यमिति । सा रामायणरूपा या भारती सैव भारतम् । अर्धेति तत्र हि भिन्नाकारमूर्त्तिद्वयमेकैकदलघटनयैकाकारं कृतमिह तु निरन्धनद्वयमेकाकारामिति शोभनत्वम् ॥ ४१ ॥

एकत्रेति । 'ज्योत्स्ना चन्द्रातपः स्मृत'इति त्रिकाण्डशेषः । पदं स्थानं 'पदं स्थानेऽपदेशे च व्यवस्थानापदेशयो'रिति मेदिनी । प्रबन्धः काव्यम् ॥ ४२ ॥ ४३ ॥

विस्तारितेति । अगाः पर्वताः आह च 'नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः । उद्यानसलिलक्रीडामधुपानरतोत्सवैः । विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः । मन्त्रद्यूतप्रयाणाजिनायकाभ्युदयैरपि । अलंकृतमसंक्षिप्तरसभावनिरन्तरम् । सर्गैरनतिविस्तीर्णैः श्राव्यवृत्तैः सुसन्धिभिः । सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जनम् । काव्यं कल्पान्तरस्थायि जायते सदलङ्कृती'ति ॥ ४४ ॥

दोषान्धकारव्यपसारणेन
गुणाम्बुजोन्मीलननित्यदक्षाः ॥
सन्तः प्रबन्धं मम शोधयन्तु
लोकं मयूखा इव चण्डरश्मेः ॥ ४५ ॥
अनध्वन्याः काव्येष्वलसगतयः शास्त्रगहने-
ष्वदुःखज्ञा वाचां परिणतिषु मूकाः परगुणे ॥
विदग्धानां गोष्ठीष्वकृतपरिचर्याश्च खलु ये
भवेयुस्ते किं वा कविभणतिकण्डूतिनिकषाः॥ ४६॥
असद्भिरारोपितदूषणानि
न सूक्तिरार्यैरवधीर्यते मे ॥
पीत्वोज्झितां राहुमुखेन चान्द्रीं
न किं सुधा नाकजुषो जुषन्ते ॥ ४७ ॥
रत्नावतंस इव भारतमण्डलस्य
क्षामन्दिशो दशरथस्फुटवीरलक्ष्मीः ॥
राजा सुमन्त्रविहिताभिरतिर्बभूव
पाण्डुर्यशोभिराभिरञ्जितसर्वलोकः ॥ ४८ ॥

दोषेति । दोषः स्याद्दूषणे पापे दोषा रात्रौ भुजेपि चे'-ति विश्वः ॥ ४९ ॥

अनध्वन्येति । वाचां परिणतयो नालिकेराम्रमृद्वीकाख्याः पाकाः। कण्डूतीति । यद्यपीह वृत्तिकारोक्तः स्त्रियां क्तिन्। तथापि कण्डूयत इति कण्डूतिः । कविभणितिः कण्डूतिरुत घर्षकस्तस्य निकषाः परिक्षास्थानानि इति भाष्योदाहृतब्राह्मणकण्डूत्यादिवत् कर्त्तरि क्तिन् । इतिव्याख्येयम् । यद्वा कण्डूयतेः क्विन् कण्डूः तस्याः ऊतिऽनैरन्तर्यम् । 'ऊतिः स्त्रीरक्षणे स्यूता'विति मेदिनी ॥ ४६ ॥ ४७ ॥

इत्यावश्यकसिद्धान्तप्रदर्शनपरिष्कृताम् ।
रामधर्मात्मजकथामथ व्याख्यातुमारभे ॥

मातुः श्रियं संदधदिन्दुमत्या
श्लाघ्यः शरत्काल इवोडुपङ्क्तेः ॥
असौ प्रजारक्षणदक्षभावाद-
जस्य चक्रे मनसः प्रमोदम् ॥ ४९

रत्नेति । ' उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् । वर्षं तद्भारतं नाम भारती यत्र सन्ततिः ' इति विष्णुपुराणे । भारतमण्डलस्य भरतवर्षस्य रत्नमयो वसन्त इव ॥ पुंस्युत्तंसावतंसौ द्वौ कर्णपूरेऽपि शेखरे' इति अमरः । दिशः पराक्रमेण व्याप्नुवन् स्फुटाः शौर्यसम्पदो यस्य सुमन्त्रेण मन्त्रिविशेषेण धृतप्रीतिर्यशोभिः पाण्डुः शुक्लोनुरञ्जितप्रजो दशरथो नाम राजा बभूव । पक्षे भरतापत्यसमूहस्य भारतानां मण्डलस्ये चेति वा । सर्वो द्वंद्वोपि विभाषैकवदि'त्यस्य द्वादशराजकस्येत्यर्थः । रामानुजो शास्त्रभेदे दौष्यन्तौ भरते नट ' इति मेदिनी । दशदिशः क्रमात् 'चतस्त्रः कीर्त्तयेदष्टौ दश वा ककुभः क्वचिदि'तिवाग्भटः । रथे शरीरे स्फुटाः प्रभाविशेषेण लक्ष्यमाणाः वीरलक्ष्म्यो यस्य ।'न द्यूतश्चे'ति सिद्धे उरःप्रभृतिषु लक्ष्मीशब्दस्यैकवचनान्तस्यैव नित्यः कन् यथा स्यादिति नियमार्थपाठादिति अन्यत्र शेषाद्विभाषेपि वैकल्पिकत्वान्न कप् । 'अकृशमकृशलक्ष्मीरि'ति भारविः । दशरथ इव स्फुटवीरलक्ष्मीरिति कश्चित् । 'रथः स्यात्स्यन्दने काये तिनिशे वेतसेपि चे'ति विश्वः । रथ स्फुटेत्यत्र 'खर्परे शरि वा विसर्गस्य लोपो वक्तव्यः'। पाण्डुर्नाम राजा । शोभने मन्त्रे तन्त्रावायचिन्तालक्षणे धृतप्रीतिः । 'मन्त्रो वेदप्रभेदे स्याद्देवादीनां च साधने ॥ मन्त्रस्तु गुप्तवादे चे'ति विश्वः ॥ ४८ ॥

मातुः इन्दुमतीनाम्न्या भोजकन्यायाः शोभां वीरप्रसूव्यप-

विचित्रवीर्यस्य दिवं गतस्य
पितुः स राज्यं प्रतिपद्य बाल्ये ।
पुरीमयोध्यां धृतराष्ट्रभद्रां
सहस्तिशोभां सुखमध्युवास ॥ ५० ॥

देशलक्षणां श्लाघ्यः प्रशास्यः उडुपङ्क्तेरौज्ज्वल्यातिशयसंपदम् ॥ शरत्काल इव अजनाम्नः पितुः पक्षे मातुरम्बालिकायाः श्रियं पाण्डुतालक्षणां दधानः सा हि व्यासमुनेस्तेजः सोढुमशक्नुवाना पाण्डुतामापेदे ॥ ततोस्याः पुत्रोपि पाण्डुवर्णोऽभूत् ॥ श्लाघ्यो राजगुणयोगात्प्रशस्तः चन्द्रवत्या उडुपङ्क्तेः शरत्काल इव अजस्य ब्रह्मणो विष्णोर्वा स हि राजद्वारा लोकस्थितिं निर्वहति ॥ 'अजा विष्णुहरच्छागा' इत्यमरः ॥ असौ खङ्गे श्लाघ्य इति कश्चित् ॥ ४९ ॥

विचित्रवीर्यस्येति ॥ अद्भुतप्रभावस्य पितुरजस्य संस्थितस्य राज्यं बाल्ये प्राप्य स दशरथो धृतं राष्ट्रे भद्रं शिवं यया तां धृतराष्ट्रैः परम्परागतैः सुराजभिः धृतैः सम्यक् पालितैः राष्ट्रैः पर्यन्तदेशैर्वा भद्रामिति वा ॥ 'धृतराष्ट्रः सुराज्ञि स्यात्पक्षिक्षात्रियभेदयोरिति विश्वः ॥ हस्तिशोभासहितां अयोध्यां नाम पुरीं सुखं यथा स्यात्तथाऽध्युवास ॥ 'उपान्वध्याङ्वस' इति आधारस्य कर्मत्वं ॥ पक्षे विचित्रवीर्यनाम्नः पितुः योद्धुं अशक्यां योधनीयः शत्रुरस्या वा अयोध्यां धृतराष्ट्रेण ज्येष्ठभ्रात्रा भद्रां कल्याणरूपां धृतराष्ट्रभद्रां कार्याकार्यविचारशून्यत्वाद्वृषभा यस्यामिति वा हस्तिशब्देन हस्तिना निर्मातृरूपेण जनितया शोभया सहितां हस्तिनापुराख्यां पुरीमध्युवास । 'उक्षाभद्रो बलीवर्द' इत्यमरः । 'शिवं भद्रमि'ति च ॥ ५१ ॥

बाणश्रेणिकरालकार्मुकभृता तेन घ्नता विद्विषः
क्ष्माभारक्षयजृम्भितोरगपतिप्रारब्धनानाशिषा ।
पूर्वोर्वीपतिकल्पिताभयचतुर्दिक्पालवर्जं निजां
चाज्ञां स्थापयतां त्रिलोकवलये दोर्मण्डलं मण्डितम् ॥९१॥

विक्षिप्तस्य प्रतिनृपकुलं राजशब्दस्य लोके
तेनात्मानं नियतविषयं कुर्वता तेजसश्च ।
पादन्यासः शिरसि रचितः सर्वपृथ्वीश्वराणां
छत्रछायापगमसुगमे घर्मभावे च तुल्यम् ॥ ९२ ॥

करग्रहात्कैकयकोसलेन्द्रभुवोर्गुरुश्रीविनमत्सुमित्रः ॥
पृथावरोधः समरे जितारिर्गोप्ता हिमाद्रीश्वरतां स लेभे ९३

बाणेति । 'करालो दन्तुरे तुङ्गे' इत्यमरः । तेन दशरथेन पाण्डुना च । एवमग्रेपि । क्षयोऽपनयः तेन जृम्भित उच्छ्वसितः पूर्वैः पृथुप्रभृतिभिः कल्पितमभयं येषाम् । तानिन्द्रयमवरुणकुबेरांश्चतुरो दिक्पालान् वर्जयन्ति तद्यथा स्यात्तथा कर्मण्यन्तस्य क्रियाविशेषणत्वान्नपुंसकत्वकर्मकत्वं च । पूर्वराजानुरोधादेव दिक्पालान्वर्जयित्वा क्ष्मां प्रशशासेति भावः । त्र्यवयवो लोकस्त्रिलोकः । समाहारद्विगौ तु त्रिलोकीति स्यात् । न च पात्रादित्वेन निर्वाहः। 'यदि त्रिलोकी गणनापरा स्यादि'त्याद्यनुपपत्तेः । यत्तु उत्तरपदे द्विगुरिति कश्चित् । तन्न । तस्य पञ्चगवधन इत्यादित्रिपदसमासे चरमावयवरूपोत्तरपदनिर्मितविषयत्वेन प्रकृते उक्तिसंभवाभावात् ॥ त्रिलोक एव वलयं तस्मिन्करणस्याधिकरणत्वविवक्षया सप्तमी ॥ ९१ ॥

विक्षिप्तस्येति । साधारणस्य । 'पादा रश्म्यङ्घ्रितुर्यांशाः' इत्यमरः ॥ ९२ ॥

करेति । कौसल्याकैकेय्योः पाणिग्रहाद्गुरुश्रीः । विनमन्ती

ततः प्रजानां परिपालनेन
कृतात्मकृत्यः क्षितिपः कदाचित् ॥
प्रियानुयातो मृगयानुरोधा-
त्सयौवनश्रीः प्रययौ वनान्ते ॥ ५४ ॥

शावानुबद्धहरिणीलसितोपलानां
कोलावलीदलितबालकसेरुकाणाम् ॥
दन्तावलोन्मथितपल्लवसल्लकीनां
सो वाभवद्वनभुवामुपकण्ठवर्ती ॥ ५५ ॥

शङ्कुव्याकीर्णरङ्कुद्रुतनिशितशरक्षुण्णदिव्यत्तरक्षु-
ज्याघोषक्षुब्धकण्ठीरवरवचकितव्यस्तमातङ्गयूथम् ।
खङ्गव्यालूनखङ्गं तुमुलकलकलप्रान्तकूजच्छकुन्तं
भल्लध्वस्ताच्छभल्लं वनभुवि मृगयाकर्म तेन प्रतेने ५६॥

उपास्थिता सुमित्रा तृतीयभार्या यस्य पृथौ महति सङ्ग्रामेऽवरो-
धः निःप्रतिबन्धः अत एव जितशत्रुर्गोप्ता च स दशरथः आ-
हिमाद्रि हिमालयपर्यन्तं ईश्वरतां स्वाम्यं प्राप पक्षे कोसलादि-
देशद्वयाद्बलिग्रहणात्प्रवृद्धसम्पत्प्रणमन्सुमित्रः । पृथा कुन्ती ।
'अवरोधस्तिरोधाने राजदारेषु सद्गृह' इति मेदिनी । स पाण्डुः
हि स्फुटं माद्र्याः पतित्वं प्राप । कुन्तीमाद्र्यौ तस्य भार्ये ।
'बलिहस्तांशवः करा' इत्यमरः ॥ ५३ ॥

ततः प्रियैर्वयस्यैः पक्षे प्रियाभ्यां कुन्तीमाद्रीभ्यामनुयातः ५४

शावेति । शिशुसंयुतमृगीभक्षिततृणविशेषाणां 'उलपस्तृ-
णभेदे स्याद्गुल्मिन्यामुलपं मत'मिति विश्वः । कोलाः वराहाः
कसेरुर्जलकन्दविशेषः । सल्लक्यो गजभक्ष्याः । समासान्तवि-
धेरमित्यत्वान्न कप् । उपकण्ठः समीपम् ॥ ५५ ॥

शङ्क्विति । शङ्क्वित्यादीनि मृगयाकर्मणः क्रियायाः वा वि-

एवं स तेनानुदिनं वनेषु निषेव्यमाणो मृगयाविहारः ॥
समीरणोत्सेक इवाप्सु नावं सप्ताङ्गचिन्तां नृपतेर्जहार ५७
स गाढबुद्धिस्तमसोपकण्ठे विवर्त्तमानं गतभीरभीकम् ॥
मत्वा मृगं मार्गणलक्षभूतमनग्र्यजन्मानमृषिं चकार ५८
तपस्विनश्छन्नतनोः शरेण विभिन्नमूर्त्तेर्जनकान्महाधेः ॥
शापं सुतापायनिबद्धमृत्युं प्रियानुवृत्तौकुशलोऽप्यवाप॥५९॥

शेषणानि । 'दीर्घायुधः शलः कुन्तः शल्यः शङ्कुरि'ति त्रिकाण्डशेषः । दीव्यन्तस्तरक्षवो मृगादना यत्र । क्षुब्धस्य मन्थे निपातनात् क्षुब्धः 'सिंहः कण्ठीरवे भीमे विक्रान्त' त्रिकाण्डशेषः ' ऋक्षाच्छभल्लभालूका' इत्यमरः ॥ ५६ ॥

एवमिति । स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । राज्याङ्गानि तेषां तद्वतो राज्यस्य वा चिन्ताम् ॥ ५७ ॥

सेति । दृढा मृगया एवेति बुद्धिर्यस्य तमसायाः नदीविशेषस्य समीपे अभीकं निर्भयं 'आरण्याः पशव'इति मेदिनी । 'भद्रो मन्दो मृगो मिश्र'इति गजभेदानां पालकाव्येनोक्तत्वाद्विशेषसामान्यप्रयोगाद्गजमेव मत्वा अनग्रजन्मानं अब्राह्मणं 'न द्विजातिरहं राजन्मा भूत्ते मनसो व्यथे'ति रामायणे तदुक्तेः । ऋषिं तापसं विव्याध । पक्षे तमसा मोहेन व्याप्तबुद्धिः समीपे चरन्तं 'अभीकं कामुके क्रूरे निर्भये त्रिषु ना कवावि'ति मेदिनी । न अग्रं जन्म यस्मात्तं ब्राह्मणमृषिं मृगं मत्वा ॥ ५८ ॥

तपस्विन इति । स दशरथो वेतसादिछन्नदेहस्य स्वबाणेन विद्धस्य तापसस्य 'दीनः स्यात्तापसे दीने' इति विश्वः । महाधेः शोकयुक्तात् तातात् शापं प्राप । प्रियैः मधुरवचनैः । अनुवृत्तौ परः शापमाह । सुतेति । पुत्रविश्लेषो नियतो मृत्युर्वास्मिन् । पक्षे मृगपक्षे मृगरूपगुप्तात् । बाणविद्धामहाधिजनका-

विषद्रुमस्य व्यसनाह्वयस्य
फलं स लब्ध्वा सहसा निवृत्तः ॥
कान्तोपभोगेषु पराङ्मुखात्मा
निनाय कालं निरपत्यदुःखी ॥ ६० ॥

असंततेः संति कुतः सुखानी-
त्यसौ विचिन्त्य प्रतिपन्नमन्युः ॥
सह स्वदारैर्नियतः सुतार्थे
राजा सुरप्रार्थनतत्परोऽभूत् ॥ ६१ ॥

एतस्मिन्समये विपक्षभीताः
क्षीराब्धेस्तटभुवमेत्य शक्रमुख्याः ॥
गीर्वाणाः कृतनुतिसूक्तयस्त्रिधाम्ने
लोकानामुदित मुपल्लवं शशंसुः ॥ ६२ ॥

त्तापसादातिशायितं तापं प्राप्तुं शापं प्राप। कुशलोपि सन् 'क्रि-यार्थे'ति कर्मणि चतुर्थी । शापमाह प्रियेति । स्त्रीसङ्गतितो मृत्युर्यत्र ॥ ५९ ॥

विषेति । 'मृगयाक्षाः स्त्रियः पानं वाक्पारुष्यार्थदूषणम् । दण्डपारुष्यमित्येतन्महाव्यसनसप्तकम्' । निवृत्तः पुरं प्रत्यागतः स दशरथः कान्तेषूपभोगेषु अपत्यस्याभावो निरपत्यं अर्थाभावे-व्ययीभावः । तेन दुःखी पक्षे निवृत्तो निवृत्तिं प्राप्तः का-न्तोपभोगेषु ॥ ६० ॥

असन्ततेरिति । असौ दशरथः प्रतिपन्नमन्युः आरब्धाश्वमे-धः कौशल्यादिभिः सह वृतः पुत्रनिमित्तदेवताराधनतत्परो-भूत् । पक्षे मन्युः शोकः 'मन्युर्दैन्ये क्रतौ क्रुधी'ति हैमः । सुरा-णां धर्मादिनाम् ॥ ६१ ॥

एतदिति । दशरथस्य पाण्डोश्च पुत्रकाम्यकाले विपक्षा रा-

संदिश्य त्रिदशजनान्यथानुरूपं
तेजोंशैर्भुवि जननाय तत्र तत्र ॥
दैत्यारिस्तदनु तमोनुदोन्ववाये
स्वैरंशैरवतरितु चतुर्भिरैच्छत् ॥ ६३ ॥

ततो मुनिव्याहृतमन्त्रयुक्त्या
तदीयपत्नीपरिचिर्यया च ॥
भक्त्योपसृत्या च नृपस्य जज्ञे
पिण्डोपलब्धिर्विबुधप्रसादात् ॥ ६४ ॥

वणादयः शिशुपालादयश्च त्रीणि भूर्भुवःस्वरूपाणि स्थानानि ब्रह्मविष्णुशिवाख्यानि तेजांसि मूर्त्तयो वा 'यस्य गृहे देहा त्विट् प्रभायामि'त्यमरः ॥ ६२ ॥

सन्दिश्येति । तेजांशैस्तद्वद्वानरादिरूपैः तमोनुदोर्कस्येन्दोश्च वंशे । 'चन्द्राग्न्यर्कास्तमोनुदा'इत्यमरः। स्वैश्चतुर्भिरंशैः रामादिभिः पक्षे सहार्थयोगे तृतीया । धर्मवाय्वेन्द्रदस्त्रैः सह रामकृष्णप्रद्युम्नानिरुद्धैरिति कश्चित् ॥ ६३ ॥

तत इति । मुनिना ऋष्यशृङ्गेण व्याहृतानां मन्त्राणां योगेन तदीयपत्न्यः कौसल्याद्याः ताभिः कृतया परिचर्ययार्थाद्देवानां तस्य मुनेः पत्नी शान्ता नाम दशरथस्य कन्या तत्कृतया पत्युः परिचर्ययेति वा तथा नृपस्य भक्त्या ' उपसृतिः सङ्गमात्रे सेवायामपि योषिती'ति मेदिनी । पिण्डस्य दिव्यपुरुषदत्तान्नस्य पिण्डप्रदपुत्रस्य वा प्राप्तिः जज्ञे । पक्षे चोत्रधारणार्थः । तस्य पाण्डोः पत्न्या कुन्त्या कृतया परिचर्यया तद्धेतुकया दुर्वासःप्रदिष्टमन्त्राणां युक्त्या भक्त्या उपसृत्या च पाण्डोः सुतानां प्राप्तिः । विबुधाः इन्द्रादयः ॥ ६४ ॥

स्फुरदृष्यशृङ्गविततानि चान्वहं
सवनान्तराण्यधिगतो महीपतिः ॥
चतुरोपि पञ्चमुखभास्वरश्रिय-
स्तनयानवाप हरिदस्रतेजसः ॥ ६५ ॥

स्फुरदिति । स्फुरद्दीप्यमानेन ऋष्यशृङ्गेण वैभाण्डकिना अन्वहं प्रतिदिनं विस्तारितानि सवनान्तराणि यज्ञभेदान्प्राप्तो दशरथः पञ्चमुखस्य सिंहस्य शिवस्यैव वा भास्करा श्रीर्येषां तांश्चतुरः पुत्रानवाप । हरिरिन्द्रो दस्रो स्ववैद्यौ तेषामिव तेजो येषां तान् हरितां दिशां अस्रेषु कोणेषु तेजो दीप्तिः हरितं श्यामं अस्रं तेजः केशप्रभा येषामिति वेति कश्चित् । 'सवनं यजने स्नाने सोमनिर्दलनेपि च'। 'अन्तरं परिधाने स्याद्भेदे रन्ध्रावकाशयोः । आत्मान्तर्धिविनात्मीयबहिर्मध्यावधिष्वपि'। 'हरित्ककुभि वर्णे च तृणवाजि विशेषयोः । हरितेपि च दूर्वायां हरिद्वर्णयुतेपि च'। 'अस्रः कोणे सरसिजे चास्रमश्रुणि शोणिते' इति विश्वः । पक्षे प्रचलन्मृगविषाणैः प्रचलन्मृगैः पर्वतशिखरैः । 'कृष्णविषाणया कण्डूयत' इति श्रुतेः । सङ्गृहीतमृगशृङ्गैर्वैखानसैर्वा व्याप्तानि वनान्तराणि स पाण्डुश्चतुरः शापपरिहारे कुशलः स्वयमुत्पादेन दक्षोपि वा । 'दक्षेतु चतुरपेशलपटवः सूत्थान उष्णश्चे'त्यमरः । हरीणां यमानिलेन्द्राणां दस्रयोरश्विनोश्च तेजसो बीजान्मुखे । भास्वरशोभासंपन्नान् पञ्च पुत्रानवाप । धर्माद्युधिष्ठिरं वायोर्भीमसिन्द्रादर्जुनमश्विभ्यां नकुलसहदेवाविति ' यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु ॥ शुकाहिकापिभेकेषु हरिर्ना कपिले त्रि'ष्वित्यमरः । 'शुक्रं तेजो रेतसी च बीजवीर्येन्द्रियाणि चे'ति च ॥ ६५ ॥

कृतार्थता कीदृगहो नृपस्य यदेनमालम्बितपुत्रमूर्त्तिः ॥
देवः स्वयं धर्ममयः सिषेवे सहानुजन्मा गुरुभक्तिनम्रः ६६

स लक्ष्मणोन्नीतसमृद्धिरुद्य-
च्छत्रुघ्नसंपद्भरतैधितश्रीः ॥
ज्यायान्विरेजे क्रमशोभिरामः
कौमारमासाद्य वयः कुमारः ॥ ६७ ॥

युधिष्ठिरं भीमधनंजयाभ्यां समं दधानं नकुलेन लक्ष्मीम् ॥
समादवाप्तं सहदेवनिष्ठं ज्येष्ठं सुतं वीक्ष्य तुतोष तातः॥६८॥

कृतार्थेति । नृपस्य दशरथस्य पाण्डोश्च कीदृक् अनिर्वाच्या धर्ममयो विष्णुरूपधर्मश्च । अनुजन्म भरतादिभिः भीमादिभिश्च सह वर्तमानः । 'वोपसर्जनस्ये'ति वैकल्पिकत्वान्न स भावः ॥ ६६ ॥

सेति । लक्ष्मणशत्रुघ्नौ सुमित्रापुत्रौ भरतः कैकेयीसुत इति रामभ्रातरः ज्यायान् ज्येष्ठो कुमारो बालः कौ पृथिव्यां मार इवेति वा स रामः क्रमेण शोभमानं कौमारं वयः प्राप्य शुशुभे। पक्षे लक्ष्मणेन नाराचचिह्नानुमितसमृद्धिः क्रमशः उद्यद्भीरिहारिसम्पद्भरत इव समृद्धशोभः । 'रामानुजे शास्त्रभेदे दौष्यन्तौ भरतो नट' इति विश्वः । 'लक्ष्मणं लाञ्छने नाम्नि रामभ्रातरि लक्ष्मण' इति च । अभिरामः सुन्दरः ॥ ६७ ॥

युधि सङ्ग्रामे स्थिरं । 'सप्तमी'तियोगविभागात्समासः। 'गवियुधिभ्यां स्थिर'इति षत्वम् ॥ अत एव ज्ञापकात्सप्तम्याश्चालुक् रुद्रानलतुल्यं कुले लक्ष्मीं दधानं न इति न ॥ अपि तु दधानम् ॥ समाल्लक्ष्मीपतेरेवाप्तं देवनिष्ठासहितज्येष्ठं सुतं रामं प्राप्य तातो दशरथः तुतोष । पक्षे भीमसेनार्जुनाभ्यां सह नकुलेन शोभमानं सह मेन चन्द्रमसा वर्तत इति समःशिवः तस्माद्दुर्वा-

संतानलाभादनृणः पितॄणां हर्षादसंभावितपूर्वशापः ॥
समं स्वदारैरनुभूतकामः स शक्रतोषैकरतिर्नृपोऽभूत् ६९
विद्यां गुरूणां निलयादवाप्य काले कुमारा धृतराष्ट्रमेत्य ॥
ववन्दिरे भूमिपतिं जनानां विलोचनालीरनिमेषयन्तः ७०
गुणैरुपेता गुरुभीष्महृद्यैः क्षत्रानुरूपैर्वचनैर्विनीताः ॥
कृपाश्रयास्ते कुशलाः कलासु प्रमाणकोटिप्रवणा निजह्नुः ७१

सोरूपात् तातः पाण्डुः 'मः शिवे परिमायां चे'ति विश्वः ॥ सहदेववत्सलज्येष्ठं सुतं युधिष्ठिरं प्राप्य तुतोष ॥ 'भीमोम्लुवेतसे शम्भौ घोरे चापि वृकोदर' इति विश्वः 'धनंजयोर्जुने वह्नौ नागे मृद्देहमारुत' इति मेदिनी ॥ 'अर्जुनः फाल्गुनो जिष्णुः किरिटी श्वेतवाहनः ॥ बीभत्सुर्विजयः कृष्णः सव्यसाची धनंजय' इत्यर्जुननामानि ॥ ६८ ॥

सन्तानेति ॥ स दशरथो इन्द्रादिदेवताराधनपरोऽभूत् ॥ कैकेय्या साकमिन्द्रसाहाय्ये कार्ये अगमत् इति कश्चित् तत्र ॥ तस्य वक्ष्यमाणत्वाद्रामायणे दर्शनाच्च तस्माद्यज्ञे देवानामनृणो-भूदित्यर्थः ॥ हर्षात्पुत्रसम्पन्निमितान्न सम्भावितपूर्वः अन्धदत्त-शापो येन दारैः कौसल्यादिभिः सह भुक्तभोगः पक्षे हर्षात् कान्तादर्शनजाद्विस्मृतमुनिशापः माद्र्या समं कृतसम्भोगः पाण्डुः शक्रातिथिरभूत् माद्र्या सङ्गत्य संस्थित इत्यर्थः ॥६९॥

विद्या इति ॥ कुमाराः रामादयः ॥ गुरूणां गृहात् विद्याः प्राप्य यथोचितसमयधृतराष्ट्रं येन तं सुराजानं वा ॥ 'धृतराष्ट्रः सुराज्ञि स्यान्नागक्षत्रियभेदयोरि'ति मेदिनी ॥ पक्षे शतशृङ्गपर्वते तपस्यतां शुकादीनां गृहादधीतविद्या युधिष्ठिरादयः धृतराष्ट्रं हस्तिनापुरस्थं पितृव्यम् ॥ ७० ॥

गुणैरिति ॥ गाम्भीर्यात् दुरवगाहैः शत्रूणां भयङ्करैः सतां

ते स्निग्धगम्भीरगिरः कुमारास्त्रैलोक्यतापप्रशमैकदक्षाः ॥
नवाम्बुवाहा इव धार्त्तराष्ट्रानुद्वेजयन्ति स्म चिरं विपक्षान् ७२
गुरुकृपोपनतायुधविद्यया समधिकं परिबृंहिततेजसः ॥
पवनसंहतपावकसन्निभानृपसुतापरिभीषणतां दधुः ॥ ७३ ॥

मनोहरैः गुणैर्युक्ताः क्षत्रजातैः उचितैर्वचोभिः शिक्षिताः दयालवः सर्वकलाकुशलास्ते रामादयः शास्त्रप्रकर्षे पारदृश्वानाश्चिक्रीडुः ॥ 'वाच्यलिङ्गे विनीतः स्यादुपनीते जितेन्द्रिये ॥ अमिते निर्वृते चापि विनयंग्राहितेपि चे'ति विश्वः ॥' कोटिः स्त्रीधनुषोग्रेस्त्रे संख्याभेदे प्रकर्षयोरि'ति मेदिनी ॥ प्रमाणं हेतुमर्यादास्त्रिषु यत्ताप्रमातृषु ॥ प्रवणं क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे' इत्यमरः ॥ ७१ ॥

पक्षे गुरुर्द्रोणः भीष्मः शान्तनवः तयोः हृद्यैः हृदयङ्गमैः क्षत्रा विदुरेण 'गुरोर्निषेकादिकरे पित्रादौ सुरमन्त्रिणि ॥ दुर्जरालघुनोः प्रोक्तो गुरुर्महति चान्यवत्' ॥ 'भीष्मस्तु भीषणे रुद्रे गाङ्गेये च निशाचरे' ॥ 'क्षत्ता शूद्राक्षत्रियजे प्रतीहारे च सारथौ ॥ भुजिष्यातनये क्षत्ता नियुक्ते च प्रजासृजी'ति ॥ ते रामादयः नवाब्दा विगलितपक्षान् हंसानिव शत्रून् उद्वेजयन्ति स्म पक्षे नवाब्दा इव ते युधिष्ठिरादयो हंसानिव धृतराष्ट्रपुत्रान् ॥ स्निग्धत्वादि त्रैलोक्येत्यादि च पक्षत्रयेपि तुल्यम्। भारतपक्षेपि शिष्टः पक्षः कर्णादिः सहायवर्गो येषामिति वा ॥ ' धार्त्तराष्ट्रोऽसितास्याङ्घ्रिहंसकौरवभोगिषु ' इत्यमरः 'पक्षो बले पतत्रे च पार्श्वे सखिसहाययोरि'ति विश्वमेदिन्यौ ॥ ७२ ॥

गुरुरिति ॥ रामादिपक्षे स्पष्टम् ॥ गुरुकृपौ द्रोणशारद्वतौ ॥ ७३ ॥

रसप्रसङ्गैरपराजितानां द्विजिह्वमार्गैर्न वशीकृतानाम् ॥
तीव्रप्रतापज्वलनेन तेषां भाव्यं भयं शत्रुगणोनुमेने ॥७४॥

एवं काले याति भिन्नारिरक्षो
दीव्यच्चेतो बाधितुं गाधिजन्मा ॥
भीमद्वेषी भूमिपालं ययाचे
दायादस्य प्रेषणं धर्मयोनेः ॥ ७५ ॥

रसेति ॥ शृङ्गाराद्यनासक्तानां खलमार्गैरनाक्रान्तानां तेषां रामादीनां तीव्रेण प्रतापाग्निना स्वस्यावश्यम्भावि भयं शत्रुगणोऽनुमितवान् ॥ 'स प्रतापः प्रभावश्च यत्तेजः कोशदण्डज'मित्यमरः पक्षे रसो विषम् ॥ 'शृङ्गारादौ विषे तीर्थे तिक्तादौ द्रव्यरागयोः ॥ रसो मद्ये जले चे'ति विश्वः ॥ द्विजिह्वमार्गाः सर्पदंशाः ॥ 'द्विजिह्वस्तु खले सर्पे' इति मेदिनी ॥ तेषां पाण्डवानां तीव्रं प्रकृष्टं तापेनाग्निना भयं भाव्यं प्राणान्तपर्यवसायि कर्तव्यमिति वैरिवर्गोनुमन्यते स्म ॥ भावयतेः कर्मणि यत् ॥ भवते 'रोरावश्यक' इति ण्यद्वा ॥ ७४ ॥

एवमिति ॥ भिन्ना अरयो येन दीव्यद्विजिगीषु चेतो यस्य तद्रक्षः राक्षसम् ॥ 'यातुरक्षसी'त्यमर ॥ बाधितुं भीमाः भयङ्करा निशाचरास्तेषां द्वेष्टा ते द्वेषिणोस्येति वा ॥ भीमतो भययुक्तस्य द्वेषो भीमस्तद्द्वेषस्तद्वानिति वा ॥ गाधिजन्मा विश्वामित्रः दशरथं धर्मयोनेर्धार्मिकस्य दायादस्य पुत्रस्य रामस्य प्रेषणं स्वाश्रमं प्रति प्रस्थापनं याचितवान् ॥ याचिर्द्विकर्मकः ॥ 'दायादौ सुतबान्धवावि'त्यमरः॥ पक्षे भिन्ना शत्रुरक्षा येन मोदमानं विजिगीषु वा चेतो बाधने ॥ तत्तु गाधिजन्म तीव्रमानसं यथोत्पत्तिर्यस्मिन्स भीमेन द्वेष्टा दुर्योधनो धर्मो योनिरुत्पादको यस्य धर्मात्मजस्य बान्धवस्य युधिष्ठिरस्य वारणावतं प्रति प्रस्थापनं ययाचे ॥ ७५ ॥

तद्वाक्यान्ते दत्तकर्णानुमोदः
पुत्रप्रीत्या जातकृच्छ्रः कुमारम् ॥
धर्मात्मानं प्रेषयामास दूरं
विश्वामित्रप्रीतये भूमिपालः ॥ ७६ ॥
मात्रा समं सावरजः स राज्ञा
प्रस्थापितो धाम तपोधनानाम् ॥
स्थानान्तरं विद्विषतां रणेषु
समर्थकोदण्डधरः प्रतस्थे ॥ ७७ ॥

तदिति । दत्तः कर्णानुमोदः श्रोत्रसुखं अर्थान्मुनये येन रामप्रेषणाभ्युपगमात् । यद्वा दत्तः खण्डितः कर्णानुमोदो यस्य सुतविश्लेषवार्त्तायाः दुःश्रवत्वात् । रामप्रेम्णा उत्पन्नकष्टः विश्वस्य मित्रं विश्वामित्रः॥ 'मित्रे चर्षावि'ति दीर्घः ॥ तस्य प्रीत्यर्थं धार्मिकं रामं दशरथो दूरं प्राहिणोत् ॥ पक्षे दुर्योधनवाक्यान्ते राधेयेन दत्तानुमतिर्दुर्योधनप्रेम्णाऽसञ्जातसङ्कटः धर्मस्यात्मानं पुत्रं युधिष्ठिरं विश्वशत्रोर्दुर्योधनस्य प्रीतये भूमिपालो धृतराष्ट्रः ॥ ७६ ॥

मात्रा कौसल्यया समं तत्सहितेन राज्ञा दशरथेन 'राज्ञि राडि'त्यमरः ॥ सलक्ष्मणस्तपस्विनामाश्रमरूपं स्थानान्तरं स्थानविशेषम् ॥ अयोध्यापेक्षयान्यतरस्थानं वा प्रस्थापितः ॥ शत्रूणां सङ्ग्रामेषु समर्थस्य तन्निवारणक्षमस्य कोदण्डस्य धर्त्ता स रामः प्रतस्थे ॥'कार्मुकं तु चतुर्हस्तं कोदण्डं त्वङ्गुलिं विने'ति वैजयन्ती। पक्षे मात्रा कुन्त्या साकं प्रस्थापिताः अर्थाद्धृतराष्ट्रेण भीमादिसहिताः तपस्विनो धाम आश्रयः मूर्तः तत्तेजो रूपो वा 'धाम देहे गृहे रश्मौ स्थाने जन्मप्रभेदयोरि'ति मेदिनी ॥ स राजा युधिष्ठिरः स्थानान्तरं वारणावतम् ॥ स रणेषु विद्विषतां

परकल्पितकामदेहदाहं विषयं प्राप्य स वारणावतंसः ॥
अविशङ्कमुवास तत्र भास्वद्द्युति लाक्षाभवने प्रदोषरुद्धः॥७८॥

उपनतजनक्लृप्तश्लाघ्यमार्गे च तस्मि-
न्विदुरवचनमारादाप्तभावेन शृण्वन् ॥
अनयदपि कियन्तं कार्यमालोच्य कालं
प्रकटितगुरुभक्तिः सानुजो राजसूनुः ॥ ७९ ॥

समर्थको न तु दुर्मन्त्रितेषु दण्डधरो यमस्तद्धुद्भवत्वात् ॥ शत्रूणां कृतान्त इति वा ॥ ७७ ॥

परेति ॥ परेण परमात्मना शिवेन कल्पितः कामदेहदाहो यत्र तं विषयं प्राप्य वा इवार्थे भिन्नक्रमः रणावतंस इव महावीरः स रामः तत्र भास्वतः सूर्यस्य द्युत्या कामतपःप्रभावात् सदा वनसंध्यारागेण वा लाक्षाभे लोहितवने प्रदोषेण रजनिमुखेन रुद्धो निःशङ्कमुवाच ॥ 'उपमायां विकल्पे वे'त्यमरः ॥ पक्षे शरैः शत्रुभिः कल्पितः कामेनेच्छया देहदाहो यस्मिंस्तं वारणावतं नगरसहितं विषयं देशं तद्राज्यं प्राप्य स युधिष्ठिरः तत्र नगरे भास्वतो द्युत्कान्तिर्यस्य तस्मिन् कर्मधारये पदं वा ॥ लाक्षागृहे प्रकृष्टदोषेण दुर्योधनाधिकृतेन पुरोवचनेन रुद्धो विशङ्कमुवास॥७८

उपनतेति ॥ विनीतेनारण्यकजनेन क्लृप्तप्रशस्तमार्गेक्षुणा गुरुसेवाद्याचारे तस्मिन्वने विदुरस्य ज्ञातुः विश्वामित्रस्य वचनं समीपादाप्तत्वेन गृह्णन् कार्यं गुरुनियोगरूपम् आलोच्य सलक्ष्मणो रामः प्रकटितविश्वामित्रात्यादरः कञ्चित् कालमगमत् ॥ पक्षे विदुरप्रहितखनककृतान्तः सुरङ्गापथेन लाक्षागृहे विदुरस्य कनिष्ठपितृव्यस्य ॥ 'विदुरो नागरे धौरे कौरवाणां च मन्त्रिणी'ति विश्वः ॥ ' वचनकक्षघ्नः शिशिरघ्रेश्वे'त्यादिम्लेच्छभाषयोक्तं दूरात् शृण्वन् कायमेध्वासित्यादिः प्रकटिता ख्यापिता गुरो-

स्वयमेधितचित्रभानुहेतिस्फुरितां तां वसतिं विहाय भूयः ॥
सवनान्तरमुद्यतारिभीमः स्वगुरुभूतधुरन्धरः प्रपेदे ॥ ८० ॥
विलङ्घ्य गङ्गां व्रजतः सुदूरमम्लानदेहस्य बलानुभावात् ॥
तस्याग्रतो सुन्दरतोज्ज्वलाङ्गी निशाचरी प्रादुरभून्मदान्धा ८१

धृतराष्ट्रस्य भक्तिस्तद्दत्तराज्यभागो येन अनुजा भीमादयः राजसूनुः युधिष्ठिरः 'आराद्दूरसमीपयोरि'त्यमरः ॥ ७९ ॥

स्वयमिति ॥ स्वतः प्रवृद्धाः चित्राः किरणाः यासां ताः हेतयः आयुधानि यस्य सः ॥ 'रवेरर्चिश्च शस्त्रं य वह्निज्वाला च हेतय' इत्यमरः ॥ स्फुरितां दीप्यमानां हेतिभिः स्फुरितामिति वा ॥ 'खर्परे शरीति' वा विसर्गलोपः ॥ वसतिं वेश्म ॥ 'वसती रात्रिवेश्मनोरि'त्यमरः ॥ स रामः उद्यतेष्वरिषु भीमो बिभ्यत्यस्माद्रुद्र इवेति वा स्वगुरुभूतस्य मुनेर्धुरन्धरः सम्भावितरक्षोवधादिनिर्वाहकः भूयो वनान्तरं प्रतस्थे पक्षे स्वयमात्मना भीमेनेति यावत् ॥ एधितस्य प्रज्वलितस्याग्नेर्ज्वालाभिर्दह्यमानं स भीमः उद्यतारि हिडिम्बाक्रान्तं वनान्तरं स्वस्यात्मनो गुरुभूताः स्वयं गन्तुमशक्ताः स्वाः स्वदेहाः गुरुभूता दुर्वहा येषां ते वा कुन्त्यादयः पञ्च तेषां धुरन्धरो बोढा ॥ ८० ॥

विलङ्घ्येति ॥ बलायाः विश्वामित्रदत्तविद्यायाः प्रभावादम्लानमूर्तेरुल्लङ्घितगङ्गस्य रामस्याग्रतः सुन्दरता सुन्दरस्त्री ताटिका निशाचरी राक्षसी ॥ ऊर्ध्वज्वलाः ज्वालाः यस्मात्तदङ्गं वपुर्यस्याः उल्कामुखी आविरभूत् ॥ पक्षे बलस्य विदुरादिष्टकैवर्तसार्थस्य प्रभावाद्गङ्गां विलङ्घ्यागच्छतः अम्लानदेहस्य बलिष्ठत्वात् बलानुभावादम्लानदेहस्येति वा तस्य भीमस्याग्रतः सुन्दरीभावेनोज्ज्वलाङ्गी 'त्वतलोर्गुणवचनस्ये'ति पुंवद्भावः॥ नि-

स्ववेगचकिता चलत्खगमृगा हिडिम्बावली
निरन्तरतलोदरी कृतकदक्षिणा सा क्षणात् ॥
निरीक्ष्य नृपनन्दनं मुखरकौशिके कानने
दशान्तरमुपागमत्किमपि कामचारोद्भटम् ॥ ८२ ॥
विषमेषुप्रहारार्त्तां तां कृत्वा परतो हृताम् ॥
स हिडिम्बस्य पिशितैरपुष्णात्पिशिताशिनः ॥८३॥

शाचरी अभिसारिका राक्षसी वा ॥ मदयतीति मदः कामस्तेनान्धा ॥ ८१ ॥

स्वेति ॥ स्वस्याः वेगेन चकिताः अत एवोच्चलन्तः खगाः पक्षिणो मृगाः आरण्याः पशवोऽहयः सर्पाश्च तेषां डिम्बावलीभिः कालखण्डछीहपुप्पुसाण्डपङ्क्तिभिर्निरन्तरं तलमधोभागो यस्य तदुदरं यस्याः। रलयोरेकत्वस्मरणात् ॥ 'डिम्बो भयध्वनावण्डे विछवे छीरपुप्पुसे' इतिः हैमः ॥ 'डिम्बः स्यात्कालखण्डक'मिति कोशान्तरम्। 'डिम्बे डमरविछवा'वित्यमरः। कृतके कपटे दक्षिणा सा ताटका मुखरा छिन्दिभिन्दिरितिवादिनी । कुशिकापत्यं विश्वामित्रो यत्र तस्मिन्वने रामं दृष्ट्वा किमपि अनिर्वाच्यं कामचारेण स्वेच्छया उद्भटम् अवस्थान्तरं उग्ररूपं प्राप ॥ पक्षे स्ववेगेन त्रस्ताः खगादयो यस्याः हिडिम्बा नाम राक्षसी त्रिवली निरन्तरतलोदरी मानुषीरूपधारणादौ दक्षा कूजदुलूके वने भीमं दृष्ट्वा कामावस्थाविशेषं प्राप ॥ 'महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिक'इत्यमरः ॥ ' दशावस्थादीपवर्त्योर्विस्त्रान्ते भूमि योषिती'ति मेदिनी ॥ दशान्तरं रूपपरिवृत्तिमिति कश्चित्॥८२॥

विषमेष्विति ॥ स रामः विषमेषुरतीक्ष्णबाणस्तस्य तीक्ष्ण बाणस्य प्रहारेणार्त्तां ताटकां कृत्वा पिशिताशिनो मांसादान् पततः पक्षिणः॥ 'पतत्पत्ररथाण्डजाः' इत्यमरः॥ डिम्बस्य छी-

प्रतीपदर्शिनी भूत्वा विचचारास्य यत्पथि ॥
ततो गुरुगिरा तस्याः जीवितेशो बभूव सः ॥८४॥
वचनमत्र गुरोरनुतिष्ठता
नृपसुतेन समेत्य निशाचरी ॥
अनुपतत्पिशितासिघटोत्कचा
समययुक्तमपायमवाप सा ॥ ८९ ॥

ह्यद्यवयवस्य खण्डैः पुष्टांश्चकार ॥ पक्षे विषमेषुः कामः स भीमः आपततस्त्वरितमागच्छतो हिडम्बनाम्नो राक्षसस्य खण्डैः पिशिताशिनो गृध्रगोमायुप्रभृतीन् ॥ ८३ ॥

प्रतीप इति ॥ यत् यतो हेतोः सा प्रतीपदर्शिनी विरुद्धदृष्टिः यस्य रामस्य मार्गे चचार ॥ ततो हेतोः स विश्वामित्रवचनात्तस्यारताटकाया जीवितेशोन्तको बभूव तां जघान ॥ सा हिडिम्बा कामुकबुद्ध्या वक्रदृष्ट्या पश्यन्ती ॥ 'प्रतीपदर्शिनी वामे'त्यमरः ॥ गुरू कुन्तीयुधिष्ठिरौ ॥ ' गुरू गींष्पतिपित्राद्या ' वित्यमरः ॥ जीवितेशः पतिः । ' जीवितेशः प्रिये यमे' इत्यमरः ॥ ८४ ॥

वचनेति ॥ गुरोर्विश्वामित्रस्य समेत्य सङ्गत्य अनुगच्छद्राक्षससमूहः ॥ 'घटा घट्टनगोष्ठीभघटना तु च योषिती'ति मेदिनी ॥ ऊर्ध्वाः कचाः यस्याः सा ताटका समययुक्तं प्रबलविरोधोचितं अपायं मृत्युं प्राप ॥ पक्षे भीमेन रता तु 'सद्यो हि गर्भं राक्षस्यो दधन्ति प्रसुवन्ति चे'ति भारतोक्तेरनु अनन्तरमेव पतन् उत्पन्नः पिशिताशी मांसाशनः घटोत्कचाख्यः राक्षसो यस्याः सा हिडिम्बा स्मृतमात्रा समयमिति समयबन्धेन युक्तं अपायं विश्लेषं प्राप ॥ ' समयाः शपथाचारकालसिद्धान्तसंविद ' इत्यमरः ॥ ८९ ॥

महामुनेः प्राप्तवतस्तपोवनं नरेन्द्रसूनोरथ धर्मजन्मनः ॥
सद्भावनम्रस्य पराशरोद्भवप्रसादलाभेन बभूव निर्वृतिः ८६॥
तेनैवैकेन गुरुणा सनिर्वृत्तप्रयोजनः ॥
एकचक्राहितगतिर्भास्वानिव तदा बभौ ॥ ८७ ॥

महामुनेरिति ॥ नरेन्द्रसूनोः रामस्य शरोद्भवः बाणप्रयोगनिमित्तको यः प्रसादस्तस्य लाभेन पराउत्कृष्टानिर्वृतिः सुखं बभूव ॥ महामुनेः विश्वामित्रस्य तपोवनं प्राप्तवतः धर्मरूपं यस्य रामस्य तपोवनं प्राप्तस्य धनुर्वेदोपदेष्टुर्यः प्रसाद इति वा पञ्चम्यन्तानि मुनिविशेषणानि वा ॥ सद्भावेन भक्त्या नम्रस्य 'धर्मः पुण्ये यमे न्याय्ये स्वभावाचारयोः क्रतौ ॥ उपमायामहिंसायां चापे चोपनिषद्यपी'ति विश्वः ॥ पक्षे महामुनेः शालिहोत्रस्य तपोवनं प्राप्तस्य युधिष्ठिरस्य पराशरोद्भवो व्यासस्तत्प्रसादजा सुस्थितिर्निर्वृतिः 'सुस्थितावस्था गमने च सुखेस्त्रिया'मिति मेदिनी ॥ ८६ ॥

तेनेति ॥ एकेति ॥ एकेनैव विश्वामित्रेणास्त्रगमोपदेशात् कृतकृत्यः ॥ एकेषु मुख्येषु चक्रेषु उत्तमास्त्रेष्वाहितगतिः ॥ सञ्जातज्ञानः एकचक्राः एकीभूताः गणाः अहिताः शत्रवो राक्षसा येषां ते एकचक्राहिता मुनयस्तेषां गतिराश्रयो वा ॥ एकचक्राहितेषु प्रधानसमुदितशत्रुगतिर्यात्रा अस्येति वा ॥ 'एके मुख्यान्यकेवला' इत्यमरः ॥ 'चक्रो गणे चक्रवाके चक्रं सैन्यरथाङ्गयोः ॥ ग्रामजाले कुलालस्य भाण्डे राष्ट्रास्त्रयोरपी'ति विश्वः ॥ 'गतिः स्त्रीमार्गदशयोर्ज्ञाने यात्राभ्युपाययोः ॥ नाडीव्रणे सरण्यां चे'ति मेदिनी ॥ एकचक्रेणाहिता गतिर्गमनं येन स भास्वानिव बभौ ॥ पक्षे तेन व्यासेन गुरुणा अग्रिमहितोपदेष्टा ॥ एकचक्रा नगरीविशेषः ॥ ८७ ॥

तस्मिन्प्रदेशे नृपसूनुसङ्गात्सनाथभावं सहसा प्रपन्ने ॥
क्रतुक्रियासक्तधियां मुनीनां रक्षोनिमित्तं भयमुद्दिदीपे ॥८८॥

रक्षोहितद्विजायस्तदृष्टिमात्राभिनोदितः ॥
मरुदानन्दनो यत्त आतस्थौ नृपनन्दनः ॥ ८९ ॥

मारीचेष्टमरिष्टकारिणमसौ सिद्धाश्रमस्थायिनां
विप्राणामभयार्थमध्वरविधेर्गोप्ता गुरोराज्ञया ॥
सद्यः सानुचरं निशाचरपतिं भीमः सुबाहुं रणे
दोर्वीर्येण जघान वीरपदवीमारुह्य घोराम्बकम् ९०

तस्मिन्निति ॥ नृपसूनू रामलक्ष्मणौ ऋत्विातियज्ञानुष्ठातॄणां सहसा अकस्मात् पक्षे प्रपन्ने देशे ॥ एकचक्रायां नृपसूनवः पाण्डवाः याज्ञिकब्राह्मणानां । बकजं भयम् ॥ ८८ ॥

रक्षोहितेति ॥ राक्षसानामाहितेन शत्रुणा ॥ ते श त्रवोस्येति वा ॥ तेन विश्वामित्रेणायस्तं क्षिप्तं दृष्टिमात्रं तेन प्रेरितो देवानामानन्दजनको रामस्तद्वधाय सज्जोऽभूत् ॥ 'आयस्तं तेजिते क्षिप्ते क्लेशिते कुत्सिते हते ' इति मेदिनी ॥ पक्षे रक्षो बकराक्षसः अहितं शत्रुर्यस्य रक्षायां ऊहितो वितर्कितो वा द्विजः तस्मिन्नायस्ताद्दृष्टिर्यत्रेति क्रियाविशेषणम् ॥ मात्रा कुन्त्या द्विजे आयस्ता क्षिप्ता दत्ता दृष्टिर्यस्याः द्विजेन क्लिष्टा बुद्धिर्यस्यास्तया मात्रेति वा ॥ वायोरानन्दनो भीमः ॥ ८९ ॥

मारीचेति ॥ ताटकात्मजस्येष्टं सिद्धाश्रम इति कौशिकाश्रमनाम । अनुचरैः सह वर्त्तमानं राक्षसपतिं घोराम्बकं क्रूरदृष्टिं सुबाहुनामानं भीमः शत्रुभयङ्करो रामः वीरपदवीं शूरमार्गमारुह्य सद्यस्तत्क्षणे जघान मारीचं तूकृतवानित्यर्थः ॥ पक्षे मारी जनक्षयश्चेष्टा यस्य ॥ ' मारी चण्ड्यां जनक्षये ' इति मेदिनी ॥ सिद्धाश्रमः गृहस्थाश्रमः सर्वोपकारित्वात् ॥ गुरोः कुन्त्याः सा-

भूचरद्विजगणाशिनं ततः खेचरद्विजगणाशिनं द्विषम् ॥
तं विधाय कुलमग्रजन्मनां राक्षसक्षयकरो ररक्ष सः ॥९१॥
द्विजराजगवीभिः स वर्धितश्रीर्नृपात्मजः ॥
जगदानन्दयन्साक्षात्कामदेव इवाबभौ ॥ ९२ ॥

इति हरधरणीप्रसूतकाव्यकदम्बकुलतिकचक्रवर्तिबीरकामदेवप्रोत्साहितकविराजपण्डितविरचिते राघवपाण्डवीये महाकाव्ये वंशोद्भवो नाम प्रथमः सर्गः सामाप्तः ॥ १ ॥ ॥ छ ॥ ॥

नुषु गिरिशृङ्गेषु मार्गेषु वनेषु वात्यायां वा चरति ॥ सानूनामनार्याणामसारमनुष्याणाम् ॥ भक्षकमिति वा ॥ तं वकं घोरामुग्रां' सानुः प्रस्थे तुषे मार्गे वात्यायां पल्लवे मद'इति विश्वः ॥ 'सानुस्त्री वने प्रस्थे वात्यामार्गाल्पकोविद ' इति मेदिनी ॥ ९० ॥

भूचरेति ॥ ब्राह्मणभक्षकम् ॥ खेचरं गृध्रादिभक्ष्यं कृत्वा स रामो भीमश्च ॥ ९१ ॥

द्विजेति ॥ द्विजराजो विश्वामित्रः प्रशस्तब्राह्मणश्चन्द्रश्च गावो वाचः किरणाश्च ॥ कामदेवः कन्दर्पः कविप्रयोजकश्च९२

आवश्यकपदश्लेषव्याचिख्यासावशात्मनः ॥
लक्ष्मणस्य कृतौ सर्गः प्रथमः समपद्यत ॥ १ ॥

इति श्रीराघवपाण्डवीयव्याख्याने लक्ष्मणपण्डिताविरचिते प्रथमः सर्गः समाप्तः ॥ १ ॥

—०:०—

# द्वितीयः सर्गः ।

नृपेण कन्यां जनकेन दित्सिता-
मयोनिजां लम्भयितुं स्वयंवरे ॥
द्विजप्रवर्येण स धर्मनन्दनः
सहानुजस्तत्पुरमप्यनीनयत् ॥ १ ॥

मार्गेप्यथो दीर्घतमः सुतस्य कलत्रकृच्छ्रप्रतिमोचनेन ॥
अङ्गारवर्णस्य जितात्मनासौ चकार तोषं नरदेवजन्मा॥२॥

श्रीगणेशायनमः ॥ नृपेणेति ॥ जनकनाम्ना पित्रा च दातु-मिष्टां 'जनकः पितृराजर्ष्योरि'तिविश्वः ॥ अयोनिजां यज्ञीय-क्षेत्रोद्गतां च कन्यां सीतां द्रौपदीं च प्रापयितुं द्विजेषु प्रवर्यो मुख्यः 'मुख्यवर्यवरेण्याश्चे'त्यमरः ॥ तेन विश्वामित्रेण केनचि-त्तापसेन च ॥ सहानुजः सलक्ष्मणः स भीमादिश्च 'वोपसर्जने-स्येति'वैकल्पिकत्वात् सभावाभावः । धर्मेण धनुषा खड्गेन पुण्येन वानन्दयतीति धर्मनन्दनो धन्वी खड्गी पुण्यवान्वा रामः धर्मपुत्रे युधिष्ठिरश्च तां पुरं मिथिलां द्रुपदपुरीं च नीतः 'धर्मः पु-ण्ये यमे न्याय्ये स्वभावाचारयोः क्रतौ ॥ उपमायामहिंसायां चा-पे चोपनिषद्यपी'ति विश्वः॥ 'धर्मो विशासनो दैवो मनुज्येष्ठः शि-वङ्कर' इति खड्गपर्याये वैजयन्ती ॥ १ ॥

मार्गेइति ॥ दीर्घतमसो जात्यन्धस्य सुतो गौतमस्तस्य भार्या विरहेण लज्जया वा कृष्णाङ्गारवर्णस्य तदसितदस्वित्वाददतिदी-प्तस्य वा अङ्गारचुम्बितमिव व्यथमानमास्ते ॥ कलङ्कस्तारायां व्रजति मलिनाङ्गारतुलनामिति साम्रावनग्नौ चाङ्गारशब्ददर्शना-त् ॥ जितात्मनो जितेन्द्रियस्य अहल्याशापमोक्षेण राजपुत्रो रा-मस्तोषं चक्रे । पक्षे नरो नरावतारः देवजन्मा इन्द्रात्मजोर्जुनः दीर्घतमः सुबहुलान्धकारेषु तस्य प्रसिद्धस्य जितोऽभिभूतः निर्ब-द्धआत्मा देहो बुद्धिः स्वभावो वास्य ॥ 'आत्मा यत्नो धृतिर्बुद्धिः

सार्धं द्विजैः संह्हृतधाम्नि जिष्णा-
वुपेयुषि ख्यातककुत्स्थवंश्ये ॥
न यज्ञसेनस्य नयोपपन्ना
राज्ञः पुरी भूपतिभिः पुपूरे ॥ ३ ॥

स्वभावो ब्रह्मवर्ष्मं चे'त्यमरः। अङ्गारपर्णापरनाम्नश्चित्ररथस्य कलत्रेण तद्भार्यया कृतकाकुयाच्ञया यत्प्रतिमोक्षणं तेन। यदि 'त्वङ्गारपर्ण'इति पाठः तर्हि गौतमपक्षेङ्गारे पर्णमिवाङ्गारपर्णः भार्याविरहदग्धत्वादिति व्याख्येयम् ॥ जनानां पदं मदो नराणामयनं नारायण इत्यादिवद्वृत्तौ पुंस्त्वस्याप्युपपत्तेः॥ लिङ्गस्य लोकाश्रयत्वात् ॥ 'पलाशे किंशुकः पर्ण' इति पुँल्लिङ्गेनैव वा पर्णशब्देन तत्पत्रपरेण समासः ॥'स्फोटयित्वाऽक्षरं किंचित्पुनरन्यस्य दानतः॥'यत्रापरो भवेदेतच्च्युतदत्ताक्षरं हि तदि'ति विदग्धमुखमण्डनरीत्या 'पूर्णचन्द्रमुखी रम्या कामिनी विमलाम्बरा ॥ करोति कस्य नो स्वान्तमेकान्तमदनोत्सव'मित्यत्र का इत्यस्य स्थाने या इत्यस्य न्यासवद्वर्णेत्यत्रवकारस्थाने यकारन्यासः ॥ एतच्च 'क्वचिद्वक्रोक्तिभङ्गिरि'त्यत्र भङ्गिपदेनोक्तमिति केचित् ॥ २ ॥

सार्धमिति ॥ संहृतधाम्निबाल्यादनालक्ष्यतेजसि ख्यातः ककुत्स्थवश्यः पूर्वजो यस्य तस्मिंस्तद्वंशजे वा जिष्णौ जयशीले रामे द्विजैर्विश्वामित्रादिभिः साकं उपगते सति न याभिज्ञसेनस्य राज्ञो जनकस्य नयसंपन्नापुरी राजभिः पूर्णा। पक्षे जिष्णावर्जुने ब्राह्मणैः सह अत एव संवृतक्षात्रतेजसि ख्यातचिह्नस्थवंशभवे ख्यातो राजचिह्नवंशो दुर्योधनो यस्येति वा ककुद्वत्ककुदं श्रेष्ठ वृषाङ्के राजलक्ष्मणीतिविश्वः । यज्ञसेनस्य द्रुपदस्य पुपूरे इति काकुपूर्णैव या उपपन्ना सा न पुपूरे इति नञ्द्वयात्मकतार्थलाभ इति कश्चित् ॥ ३ ॥

आलोलचामरमरालचिततान्तरालैः
शस्त्रोत्करैः स्तबकिता पृथिवीश्वराणाम् ॥
नानादिगन्तरजुषां कमलाकराणा-
मेकालयत्वमिव सा नगरी जगाम ॥ ४ ॥
सद्यो मृष्टाभरणकिरणैः पूरयन्तो दिगन्तान्
वीर्योत्कर्षादहमहमिकां भूभृतो दर्शयन्तः ॥
वैन्ध्यं वैन्ध्यास्तरव इव ते पुष्पिताः सानुभागं
क्षत्रायन्ते विहितमतयः क्षोभयन्ति स्म रङ्गम् ॥५ ॥
अथानुरूपेण जनेन युक्ता मनोज्ञरूपा मनुजेन्द्रकन्या ॥
उपाययौ लोचनवर्त्म राज्ञामाज्ञेव मूर्त्ता मकरध्वजस्य ॥६॥
सा तत्र यानादवतीर्य तन्वी
सौदामिनीवाम्बुदराजिगर्भात् ॥
समीपमाप स्वपणीकृतस्य
चापस्य पुष्पायुधचापयष्टिः ॥ ७ ॥
शक्तिर्मूर्त्तिमयी स्मरस्य जगतो नारीमयं मण्डनं
कान्तानामुपमानकल्पनकलाकान्तेः समुत्तेजनम् ॥

आलोलेति । कलहंसस्थानीयछत्रचामरसरोजानां कमला लक्ष्मीः तदाकारा सा करे येषामिति वा । 'पद्माकरस्तडागो-स्त्री'त्यमरः ॥ ४ ॥

सद्यइति । मृष्टानि विमलीकृतानि 'अहमहमिका तु सा स्या-त्परस्परं यो भवत्यहंकार'इत्यमरः । वैन्ध्यं विन्ध्यसंबन्धिनं । 'वन्ध्योफले विकेशी स्यादि'त्यमरः । क्षत्रायन्ते शौर्ये बलात्कारे । 'स्वयंवरे वा रंगो वा रागे नृत्यरणक्षिता'विति मेदिनी ॥ ५ ॥

अथेत्यन्वेति । सीता द्रौपदी च एवमग्रेऽपि ॥ ६ ॥

'पणोद्यूतादिषूत्सृष्टे भृतौ मूल्ये धनेऽपि चे'त्यमरः ॥ ७ ॥

लक्ष्मीः संसृतिसागरस्य सरसी लावण्यपुण्याम्भसां
सा राजव्रजचक्षुषां क्षणमभूदानन्दपण्यस्थली ॥ ८ ॥
सौन्दर्यं श्रीपताकानिखिलयुवमनःशृङ्खलालोकचक्षुः-
पक्ष्मस्पन्दव्युदासः सुरमुनिहृदयाकर्षणः कामपाशः ॥
तारुण्योद्यानवल्लीपतिसुकृतकलाकामकोदण्डमौर्वी
रेजे तद्दोर्लताग्रे वरवरणविधौ कल्पिता पुष्पमाला ॥९॥
सा दुग्धसिन्धोरुदितैव लक्ष्मीर्लावण्यमस्या नियतं सुधैव ॥
यदेतदापीय दृशा प्रपेदे मनुष्यलोकोप्यनिमेषभावम् ॥१०॥
राज्ञां मनोदर्पणमण्डलेषु प्रत्येकमेका युगपत्स्फुरन्ती ॥
रराज बाला कुमुदाकरेषु रेखा हिमांशोः प्रतिबिम्बितेव॥११॥
पुष्पैर्विचित्रैर्ग्रथितो विरेजे तस्या घनः कुञ्चितकेशपाशः ॥
तद्वक्त्रपद्मोत्पलगन्धलोभात्सान्द्रीभवद्भृङ्गपरम्परेव ॥ १२ ॥
वक्त्रस्य तस्याः प्रसमीक्ष्य शोभां तारापतिर्मण्डलमाप भानोः॥
तथापि नो साम्यमुपैति तस्मात्तप्तुं तपः प्राप पुरारिमौलिम्॥१३
एतस्या नेत्रशोभां तुलयति न यदा खञ्जनः प्राप्तकीर्त्ति-
र्नूनं वातापिहन्तुः श्रयति पदमितो योगयुक्तस्तपस्वी ॥
तद्वन्नीलोत्पलेन प्रतिदिवसमतो मग्नमप्सु प्रविष्टाः
कान्तारं तद्वदेण्यः प्रथितमिह यतो नास्त्यलभ्यं तपोभिः१४

शक्तिरिति । कान्तानां मनोज्ञवस्तूनां स्त्रीणां च । संसृतिः संसारः ॥ ८ ॥ ९ ॥

लक्ष्मीरेव । आपीयेति पीङ्पानेइत्यस्य । पिबतेस्तु 'नल्य-पी'तीत्वनिषेधः ॥ १० ॥ ११ ॥

पुष्पैः भृङ्गपङ्क्तिसदृशः केशपाशः पुष्पैर्विरेजे इति सम्बन्धः तेन पुष्पवृतकेशपाशस्य भृङ्गसाम्यादुपमेतिपरिहारः ॥१२॥१३॥

एतस्या इति । बुद्धिसन्निहितायाः प्राप्तकीर्तिरपि खञ्जनः

तद्दन्तशोभामनुकर्त्तुमेषा नाभूद्यदा दाडिमबीजपङ्क्तिः ॥
शक्ता यतोऽस्या हृदयं विदद्रे तत्तापतप्तुं ध्रुवमीर्ष्ययैव ॥१५॥
तदीयसौन्दर्यसरोमृणालं भुजद्वयं रक्तकराम्बुजाढ्यम् ॥
विकासनार्थं रविरश्मितुल्यनखांशवोऽग्रे प्रसरन्ति शोणाः १६

नन्वेतेभ्यः स्फुटमनुनिशं बद्धकोशाञ्जलिभ्यः
सानुक्रोशं निजरुचिलवो दीयतां पङ्कजेभ्यः ॥
इत्येतस्याः प्रतिपदमिव व्याहरद्भ्यां पदान्ते
पादद्वन्द्वं ललितचतुरं नूपुराभ्यामुपात्तम् ॥ १७ ॥

गमनमलसयातेः कुम्भलक्ष्मीं कुचाभ्या-
मविकलकरशोभामूरुकाण्डद्वयेन ॥
यदियमहरदेषा हेतुना तेन नूनं
निजवपुषि करीशाः पांशुपूरं क्षिपन्ति ॥ १८ ॥

एवं नरेन्द्रेषु वितर्कयत्सु ततं विलोक्यावयवं तदीयम् ॥
उद्यम्य पाणिं निपुणेन वाणी मध्येसभं केनचिदित्यवाचि १९

वातापिहन्तुरगस्त्यस्याञ्जनो हि रोहिणिमिहानक्षत्रे दृश्यो भूत्वा अगस्त्योदयानन्तरमाविर्भवति 'योगः सन्नहनोपायध्यानसङ्गतियुक्तिष्वि'त्यमरः । 'तपस्वी तापसे दीने' इति विश्वः ॥ अतः तपसो हेतोः 'कान्तारोऽस्त्री महारण्ये त्रिलेदुर्गमवर्त्मनी'तिमेदिनी ॥ १४ ॥

तादिति । सीतायाः द्रौपद्याश्च ॥ १५ ॥ १६ ॥

नन्विति । इति व्याहरद्भ्यामिव ॥ १७ ॥

गमेति । अन्योपि हृतसर्वस्वः स्वशरीरे धूलिं क्षिपति ॥१८॥

एवं मदुक्तक्रमेणेति कवेरुक्तिः । तेन 'तस्याः घन'इत्यादौ राजोक्त्यभावान्न परोक्षदोषः । केन चिज्जनकेन धृष्टद्युम्नेन च ॥ १९ ॥

दुरानमं धनुरिदमीश्वरादृते
निजौजसा कलितगुणं विधाय यः ॥
प्रदर्शयेत्परिषदि लब्धलक्ष्यतां
जयश्रिया सह स लभेत कन्यकाम् ॥ २० ॥

इति वचसि तदानीमुक्तमात्रे नरेन्द्राः
पृथुतरभुजदर्पास्तूर्णमुत्थाय पीठात् ॥
द्रुतपदमभिपेतुस्तद्धनुर्भीमरूपं
फणिपतिमिव भोगिग्राहिणोग्र्यं गृहीतुम् ॥ २१ ॥

कन्यां निधानकलशीमिव कार्मुकं च
भीमं भुजंगमिव तत्प्रतिबन्धभूतम् ॥
दृष्ट्वा विलोलमतयः कतिचित्क्षितीशा-
नादातुमुज्झितुमपि क्षमतामवापुः ॥ २२ ॥

साभिमानमनसो नराधिपाः
केचिदाचरितबाहुसाहसाः ॥
केपि चापनतिबाहुविक्लवाः
कुर्वते स्म निजमानमानतम् ॥ २३ ॥

दुरेति । ईश्वरः शिवः समर्थश्च । लब्धः प्राप्तो लक्ष्यता उद्देशो वा येन तत्ताम् । अर्थाज्जनकस्य 'सामान्ये नपुंसकमाश्रित्य सीताया वा पक्षे लब्धसख्यतां स्वस्य ॥ २० ॥

इति । भोगिग्राहिणः अहितुण्डकस्य ॥ २१ ॥

कन्यां धनुषोदुराधर्षत्वान्नादातुं कन्यारत्नलिप्सया न त्यक्तुं यद्यपि क्रमभङ्गस्तथाप्यादानत्यागयोरेकधनुर्विषयत्वान्न दोषइति कश्चित् । कन्यैवादानात्यागयोर्विषय इत्यन्ये ॥ २२ ॥

साभीति । साभिमानमत्योस्तोलनानमयोः चापस्य वामेन माने दक्षिणेन नतौ च बाह्वोर्विक्लवो वैकल्यं येषाम् ॥ २३ ॥

दूरात्केचन केचिदीक्षणपथादन्ये करस्यन्दना-
देके धारणतः सगर्वमितरे मुष्टौ करास्फालनात् ॥
आनम्रीकरणात्परे कतिपये जीवाटनीघट्टना-
त्कोदण्डे नयशालिनीव नृपतौ वन्ध्यश्रमास्तेभवन् २४

मद्राङ्गचेदिमगधेशपुरःसरेषु
क्षत्राय राजसु जलं मनसा ददत्सु ॥
जिष्णुर्द्विजेन्द्रनिकटाद्धरिवंशकेतु-
र्गर्भादिवाग्निररणेरुदगात्कुमारः ॥ २५ ॥

वीरश्रीमानतुङ्गाचलतुलनतुलादण्डमुर्वीपतीनां
गीर्वाणद्वेषिगर्वाम्बुधिमथनमहारम्भमन्थाचलेन्द्रम् ॥
श्लाघानिःशाणकोणं जगदुदयमहावृष्टिमाहेन्द्रचापं
चापं दोर्विक्रमाग्नेः समिधमिव निजस्याददे राजसूनुः २६

दूरादिति । जीवा मौर्वी । अटनी कोटिः । रामायणपक्षे । नृपतौ यः कोदण्डस्तास्मिन्निव वन्ध्यश्रमा इत्यन्वयः । दूरादित्यादेर्नृपतिनेव वान्वयः । धारणा तु स्वधनुषः ॥ २४ ॥

मद्रेति । मद्रादिदेशाधिपेषु शल्यकर्णचैद्यजरासंधादिषु च राजसु क्षत्रियाणामकिञ्चित्कारया मृततुल्यतां सम्भावयत्सु हरेः सूर्यस्येन्द्रसोमयोश्च वंशे असाधारणचिह्नभूतो जिष्णुर्जयशीलो रामस्तन्नामार्जुनश्च विश्वामित्रस्य ब्राह्मणानां च समीपादुदगच्छत् 'निर्मन्थ्यदारुणि त्वरणिर्द्वयो'रित्यमरः ॥ २५ ॥

वीरेति । वीराणां श्रीमान् यस्तुङ्गगिरितुल्ययोस्तोलने तुलादण्डरूपे श्लाघानिःशाणस्ताम्रघटितः चर्मनद्धाननो महाघटःशब्दो स्यर्पटः(?)स्याद्गद्गदङ्गस्तथैव चेत्युक्तो वाद्यविशेषस्तस्य कोणं। राजसूनुः रामोर्जुनश्च । 'कोणो वीणादिवादनमि'त्यमरः । 'इध्ममेधः समित्स्त्रिया'मिति च ॥ २६ ॥

दृष्टं सोभिसरन् धनुः परिषदा बाल्यादवज्ञोत्तरं
गृह्णन्नध्यवसाय निश्चलतया सश्लाघ्यदत्तोत्तरम् ॥
उत्क्षिप्यानमयन् भुजाग्रतरसा सान्द्रीभवद्भिस्मयं
ज्यालेखामटनीमुखेन घटयन्केनापि नालोकितः ॥२७॥

तस्मिन्गुणाकर्षणधर्मधीरे
राजात्मजे शङ्करकार्मुकस्य ॥
बभूव भङ्गः पृथिवीश्वराणां
कर्णव्यथादायिकटुस्वनस्य ॥ २८ ॥

साकं भूपैर्मानभङ्गप्रपन्ने
चापे तस्मिन्निर्वृतालक्ष्यसिद्ध्या ॥
व्रीडानम्रा सादरं राजपुत्री
कीर्त्या रामं प्राप हृद्या कुमारम् ॥ २९ ॥

स्पष्टम् ॥ २७ ॥

तस्मिन्निति । तस्मिन् राजात्मजे रामे । गुणाकर्षणकर्मधीरे ज्याकर्षणपरे सति पिनाकस्य भङ्गोभूत् । राज्ञां कर्णोद्वेजकशब्दस्य भङ्गो भेदोभूत् जयविपर्यय 'भङ्गो जय विपर्यय' इति मेदिनी। पक्षे अर्जुने राधेयव्यथाकरध्वनेः स्वकल्याणकरस्य धनुषो गुणाकर्षणपूर्वकलक्ष्यवेधकर्माणि धीरे सति। राज्ञां भङ्गः पराजयः शं कल्याणं यथा स्यात्। करस्थस्य कार्मुकस्येति च कश्चित् २८

साकमिति । मानभङ्गपूर्वपरिमाणह्रासं धनुषि सन्मानक्षयं च राजसु प्राप्तेषु लक्ष्यस्य उद्देश्यवरस्य सिद्ध्या प्राप्त्या निर्वृता हृद्या मनोज्ञा सीता कीर्त्या सह रामं प्राप । कीर्त्या कीर्त्तनीयेति वा । पक्षे राजसु धनुषि च गौरवभङ्गं प्राप्ते लक्ष्यस्य शरव्यस्य सिद्ध्या वेधेन निर्वृता द्रौपदी कीर्तेरारामम‍र्जुनं प्राप ॥ २९ ॥

भृङ्गव्रातैरङ्गसौरभ्यलुब्धैः
कृष्णा तन्वी दृश्यमाना लतेव ॥
सा तं भेजे राजवंशप्रदीपं
पूर्वाम्भोधिं स्वःस्रवन्तीव सीता ॥ २० ॥

राज्ञां लज्जाकलङ्कः खलु मुखशशिनि रथापितः कार्मुकेण
क्षेपिष्ठं तस्य कोटौ निपुणमुपहिता राजपुत्रेण मौर्वी ॥
व्यस्ता तद्बाहुमूले निजवरणसखी मङ्क्षु माला कुमार्या
बालायां साधुवादैः सह सकलजनैरर्पिता नेत्रमाला ॥ ३१ ॥

भग्नोत्साहे गतवति ततः सर्वशो राजलोके
राज्ञा तेन स्वमथ भवनं प्रापितानां सहर्षम् ॥
निर्दिष्टानां मुनिगुरुगिरा मानवेशात्मजानां
सर्वेषामप्यजनि युगपत्तत्र वैवाहिकश्रीः ॥ ३२ ॥

भृङ्गेति । सीता रामं भेजे ॥ गङ्गा पूर्वसमुद्रमिव ॥ राजा चन्द्रः वंशप्रदीपः पुत्रो यस्येति कश्चित् ॥ भृङ्गौघैः हेतुभूतैः कृष्णवर्णा लतेव दृश्यमाना ॥ पक्षे भृङ्गौघैः कर्तृभिः लतेव दृश्यमाना कृष्णा द्रौपदी अर्जुनं भेजे। सीता नाम स्वर्णदी पूर्वाब्धिमिव सा तत्र पातिता दिक्षु चोदधिं प्रतिपद्यते । 'सीताचालकनन्दा च चक्षुर्भद्रेति च क्रमादि'ति विष्णुपुराणे ॥ २० ॥

रेति ॥ राज्ञां क्षेपिष्ठं क्षिप्रतरं राजपुत्रेण रामेणार्जुनेन च ॥ कुमार्या सीतया कृष्णया च मङ्क्षु शीघ्रं सीता च मालामादाय शुभा वक्षसि क्षिप्त्वा च वराय रामाय 'रामायार्पयामास सर्वेक्षत्रिय सन्निधावि'ति नृसिंहपुराणात् ॥ ३१ ॥

भग्नेति । तत्र मिथिलायां । मुनिर्विश्वामित्रो । गुरुर्वसिष्ठः ॥ सर्वेषां रामादीनां चतुर्णामपि विवाहः समजनि ॥ पक्षे द्रुपद-

ते तत्र सर्वे समकालमेव
सम्प्राप्य दारान्सदृशान्विरेजुः ॥
त्रैलोक्यसंशोधनजागरूका
गङ्गाविभङ्गानिव सिन्धुनाथाः ॥ ३३ ॥

सम्बन्धान्मुदितात्मनां निजपदं प्राप्तुं मनः कुर्वतां
दिक्कुञ्जेषु निरन्तरप्रकिरतां क्षातं प्रदीप्तं महः ॥
तेषां विक्रमवातवेल्लितनिजक्रोधानलप्रेङ्खितः
साक्षात्काल इवोद्यतो भृगुपतिर्दुर्योधनोऽभ्यागमत्॥३४॥

स्य पाण्डवा एते इत्यविदितानां। मुनिर्व्यासः गुरुः कुन्तीः तत्र द्रौपद्यामेव एकैव सा पञ्चानामपि भार्याभूत् ॥ ३२ ॥

तेइति ॥ रामादयो युधिष्ठिरादयश्च दारान् सीतादिचतुष्टयं द्रौपदीं च ॥ ३३ ॥

सम्बन्धेति ॥ निजपदं अयोध्यां तेषां तेषां रामादीनां पराक्रमानिलसन्धुक्षितस्वक्रोधाग्निः चालितः प्रत्यक्षमुद्यतः काल इव ॥ दुःखेन योधनीयः ॥ 'भाषायां शासियुधिदृषिभ्यो युज्वाच्यः' इति युच् ॥ भृगुपतिर्जामदग्न्यः। पक्षे स्वराज्यं लब्धुकामानां दुर्योधनो धार्त्तराष्ट्रः ॥ काले प्रस्थानसमयेष्वतो भृगुः शुक्र इव ॥ स हि यात्रायां सन्मुखो नेष्टः ॥ 'उशना भार्गवः कवि'रित्यमरः ॥ स्वयंवरकाले जामदग्न्य इव ॥ अवनमूः उद्यता ऊः रक्षा यस्मात्स भृगुपतिर्द्रोणो यस्य स उद्यतो भृगुपतिरित्येकं पदं इति वेति कश्चित् ॥ तत्र द्रोणस्य भारद्वाजत्वेन भार्गवत्वाभावात्। 'एत्येधत्यूठ्स्वि'ति वृद्धेर्दुर्वारत्वात् ३४

सुदुरेति ॥ स विश्वामित्रानन्दजनको नृपतेः कुमारो दाशरथिः जामदग्न्यकरस्थितं वैष्णवं धनुराकृष्य स्वर्लोकजिगीषां

सुदुराननमानमय्य चापं रणकण्डूतिमखण्डयत्ततोस्य ॥
परलोकजिगीषयैव साकं नृपतेः कौशिकनन्दनः कुमारः ३५

अथ पुनरुपयाते तत्र संबध्य संधिं
प्रकृतिगुरुसुहृद्भिः प्रोज्झितं काङ्क्ष्यमाणाः ॥
बधिरितभुवनान्ता भूरिभेरीविरावै-
रुदधिमिव पयोदाः स्वां पुरीं तेभिजग्मुः ॥ ३६ ॥

सुहृद्भिराप्तैरभिनन्दितानां
गुणोदयप्रीणितसज्जनानाम् ॥
प्रतापविद्रावितशात्रवाणां
तेषामभूत्तत्र सुखं विवासः ॥ ३७ ॥

गुणैर्गुरौ ज्यायसि भक्तिनम्राः
पृथग् धुरीणा अपि दर्शितैक्याः ॥
दिशां विभागानुपपद्यमाना
भान्ति स्म चत्वार इवार्णवास्ते ॥ ३८ ॥

युयुत्सां चापाचकार ॥ पक्षे स इन्द्रात्मजोर्जुनः परलोकः शत्रु-जो नृपतेः दुर्योधनस्य ॥ ३५ ॥

अथेति । ते रामादयः तत्र भार्गवे संधिं कृत्वा । याते सति । तां पुरीमिन्द्रप्रस्थं ययुः ॥ प्रकृतिर्विदुरादिः ॥ सुयोधनेनापि द्विजेन सह योतरये इत्युक्त्वा गतत्वादयमेव तस्य सन्धिरिति कश्चित् ॥ ३६ ॥

सुहृद्भिरिति । तत्र स्वपुर्यां । 'गुणोऽप्रधाने रूपादौ मौर्व्यां सूदे वृकोदरे' इति विश्वः ॥ 'शात्रवं भावसंहत्योः शत्रूणां शत्रवो द्विषी'ति च ॥ ३७ ॥

गुणैः गुरौ दशरथे युधिष्ठिरे च चत्वारो रामादयो भीमा-दयश्च ॥ ३८ ॥

तैश्च राजा दशरथो युधिष्ठिरश्च ॥ विष्कम्भैरवष्टम्भपर्वतैः ॥

तैश्चतुर्भिर्बभौ राजा कुमारैः पार्श्ववर्त्तिभिः ॥
सुमेरुरिव विष्कम्भैः सहरिप्रस्थभूषितैः ॥ ३९ ॥
मुनीन्द्रदिष्टे समये निविष्टैराराधितानां भृशमत्र दारैः ॥
दिने दिने पार्थिवनन्दनानां परस्परं प्रेमभरो मुमूर्छे ॥ ४० ॥

मन्दरादिभिः स सिंहशिखरैः अलंकृतैः हरिप्रस्थमिन्द्रप्रस्थं पुरं तत्र भूषितैश्च ॥ 'विष्कम्भो योगभेदे स्याद्विस्तारप्रतिबन्धयोः । रूपकाङ्गप्रभेदे च वस्तुभेदे च योषिता'मिति मेदिनी ॥ ३९ ॥

मुनीति ॥ वसिष्ठोपदिष्टे समये पतिशुश्रूषणाद्याचारे स्थितैः दारैः सीतादिभिः ॥ पक्षे सुन्दोपसुन्दोपाख्यानपूर्वकमुपदिष्टे समये भ्रातृणामन्यतमं द्रौपदीसङ्गतमन्यतमो यः पश्येत्स द्वादशवर्षं तीर्थयात्रां चरेदिति एवं रूपे स्थितैः दारैः द्रौपद्या ॥ ' अथ पुं भूम्नि दारा ' इत्यमरः ॥ ४० ॥

इष्टेति ॥ राजा दशरथः जनन्याः कैकेय्याः गुरूणामश्वपत्यादीनां इष्टावलोकं इष्यमाणदर्शनं भास्वन्तमनिक्रान्तमतिभास्वत् तेजः शौर्यं दधानं शत्रुघ्नसहितमनीलसप्तिं नीलाश्वस्य यात्रायां निषेधाच्छ्वेतस्य प्रशस्तत्वाच्च ॥ तदारूढं भरतं तीर्थनिषेवणाय गुरुसेवनाय प्राहिणोत् ॥ ' निपानागमयोस्तीर्थमृषिजुष्टजले गुरा'वित्यमरः ॥ 'तीर्थं स्यादवतारे च यात्रोपाध्यायमन्त्रिषु । वीणा रजसि शास्त्रे च क्षेत्रोपायाध्वरेषु चे'ति धरणिः ॥ पक्षे इष्टे ब्राह्मणगोधनप्रत्यानयनार्थमावश्यके गाण्डीवग्रहणे अवलोकने इत्यवलोकस्तं केषां जनयत्यात्मानं इति जननी जाया द्रौपदी युधिष्ठिरासङ्गमदशायां ' स्वभूपूर्वजपत्नी मातृतुल्या प्रकीर्त्तिते'ति स्मृतेर्वा ॥ गुरवो युधिष्ठिरः पूजार्थं बहुवचनम् ॥ तेषां सापेक्षत्वेपि गमकत्वात्समासः ॥ जनन्याः कुन्त्याः गुरूणां भीष्मादीनां च प्रियदर्शनं जननीगुरूणां क-

इष्टावलोकं जननीगुरूणां
तेजोतिभास्वद्भरतं दधानम् ॥
राजा स शत्रुघ्नमनीलसप्तिं
प्रास्थापयत्तीर्थनिषेवणाय ॥ ४१ ॥
सरांसि शैलान्सरितश्च तीर्त्वा
गच्छन्नहीनात्मजयैधितश्रीः ॥
वीरः किरीटी स्वभुजोपगूढ-
चित्राङ्गदः सातिशयं विरेजे ॥ ४२ ॥
प्राप्तं प्रभासं पदमिष्टयोगि
मातामहस्थानमुपेत्य रामम् ॥
संतोषितक्षोणिभृताच्युतेन
लेभे सुभद्राधिगमोत्सवं सः ॥ ४३ ॥

तिपित्रादीनामित्यपि कश्चित्। भास्वन्तं सूर्यं भरतं दौष्यन्ति चा- तिक्रान्ततेजः पराक्रमं दधानं वैरिहन्तारं श्वेताश्वनामानमर्जुनं स राजा युधिष्ठिरः तीर्थानां सत्क्षेत्राणां निषेवणाय ॥ ४१ ॥

सरांसीति ॥ अन्यूननिजविजयवर्धितशोभो बुद्धिमान् मुकु- टयुक्तः। निजभुजधृतचित्रकेयूरो भरतः शुशुभे ॥ पक्षे अहीना- त्मजया गोख्यानागराजकन्याया उलूप्या 'इनः सूर्येप्रभा' वित्य- मरः ॥ किरीटी तन्नामार्जुनः ॥ हतमणिपूरेश्वरपुत्रकीकृतचि- त्राङ्गदापाणिग्रहः सातिशयं पुत्रोत्पत्तिरूपातिशयं सहितं यथा स्यात्तथा ॥ ४२ ॥

प्राप्तमिति ॥ प्रभायाः द्युतेः संपदं प्राप्य ॥ इष्टा मातुला- दयस्तद्युक्तं मातृजनस्य केकयराजस्थानं गत्वा अच्युतेन सुस्थि- रेण राज्ञा सन्तोषितः स भरतः शोभनकल्याणप्राप्तिप्रयुक्तमु- त्सवं प्राप ॥ पक्षे प्रभासतीर्थरूपं पदं स्थानं मातामहस्य कु-

प्रसूत्या पारिजातस्य पूरः क्षिराम्बुधेरिव ॥
रेजे सौभद्रसन्तानं लब्ध्वासीतरुचोन्वयः ॥ ४४ ॥
कमनीयतया मुच्यानन्दथुं सर्वदेहिनाम् ॥
सराजनन्दनो रेजे कामदेव इवापरः ॥४५ ॥

इति हरधरणीधरप्रसूतकविराजविकृतौ राघवपाण्डवीये सीताद्रौपदीस्वयंवरं नाम द्वितीयः सर्गः २

---

## तृतीयः सर्गः ।

स राजाभिमतो लोके विजयोर्जितविक्रमः ॥
हरिसारथिनाभ्येत्य याचितो भूदिवोवनम् ॥ १ ॥

न्तीपितुःस्थानं इष्टयोगि कृष्णादियुक्तं गत्वा क्षोणिभृता शेषावतारेणाच्युतेन कृष्णेन च तोषितः सोर्जुनः सुभद्रायाः कृष्णस्वसुरधिगमः प्राप्तिस्तद्रूपमुत्सवम् ॥ ४३ ॥

प्रसूत्येति ॥ असावशीतरुचः सूर्यान्वयो भरतः भद्रंसन्तानं कल्याणपरम्परां प्राप्य शुशुभे ॥ पक्षे शीतरुचश्चन्द्रस्यान्वयोर्जुनः सुभद्रापत्यरूपं सन्तानं प्राप्य ॥ ४४ ॥

कमेति । स राजपुत्रो भरत नन्दथुं आनन्दं पक्षेऽर्जुनः राज्ञः चन्द्रस्य नन्दनः पुत्रः तदवतारेणाभिमन्युना सहितः उभयत्र समानं वा कामदेवः कन्दर्पः काव्यप्रयोजकश्च राजा चन्द्रो राजानो नृपाश्च नन्दनाः समृद्धिजनका यस्य ॥ ४५ ॥

आवश्यकपदश्लेषव्याचिख्यासावशात्मनः ॥
लक्ष्मणस्य कृतौ सर्गो द्वितीयः समपद्यत ॥ २ ॥

इति राघवपाण्डवीयकाव्यटीकायां द्वितीयः सर्गः समाप्तः२

---

सेति ॥ विजयेन शत्रुपराजयेन ऊर्जितविक्रमः ॥ लोके भुवनेभिमतः ॥ स राजा दशरथः ॥ हरेरिन्द्रस्य सारथिना

क्रामन्दिवं कीर्त्तिभिरर्जुनोथ
तन्नीतवल्गद्धरिणा रथेन ॥
नरः स साक्षादिव गाण्डिवेन
चकार भीतिं धनुषा परेषाम् ॥ २ ॥

स देवदत्तोद्धतवीर्यसम्पदक्षीणबाणोज्ज्वलतूणधारी ॥
द्विषद्द्विजिह्वोग्रवनं स्वबाहुप्रतापरूपे ज्वलने जुहाव ॥ ३॥

मातलिना दिवोवनं स्वर्गस्यावनं रक्षणं याचितः । पक्षे । राज्ञो युधिष्ठिरस्याभिमतः राजा क्षत्रियः लोकेभिमत इति वा। विजयनामार्जुनः अर्जितविक्रमः अर्जितः पक्षिवाहनः कृष्णो येनेति वा ॥ हरिः वायुः सारथिर्यस्य । तेनाग्निना दिवोवनं खाण्डवम् ॥ १ ॥

क्रामन्निति ॥ तेन मातलिना नीतः प्रापितो वल्गद्धरिः छलमानाश्वो रथस्तेन दिवं स्वर्गं क्रामन् ॥ कीर्त्तिभिरर्जुनो धवलः स दशरथः साक्षान्नरो नारायणपरमूर्त्तिर्गाण्डीवेनेव धनुषा । पक्षे कीर्त्तिभिः स्वर्गं प्राप्नुवन् वल्गद्धारिः ध्वजीभूतवानरो हनूमान् सारथीभूतः कृष्णो वा यत्र तेन अग्निदत्तेन रथेन साक्षान्नरो न तु तदवतारः स इव गाण्डिवेन धनुषा ॥ 'अर्जुनः ककुभे पार्थे कार्त्तवीर्यमयूरयोः ॥ मातुरेकसुतेपि स्यात् पुंलिङ्गो धवलेन्यवदि'ति मेदिनी ॥ 'गाण्डीवगाण्डिवौ जिष्णोः कोदण्डे कार्मुके पिचे'ति विश्वः ॥ २ ॥

सदेति ॥ देवैर्दत्ता उद्धता वीर्यसम्पद्यस्य स दशरथः द्विषन्तो वैरिणो दैत्या एव द्विजिह्वाः सर्पाः त एवोग्रवनं तेषां उग्रं वनमिति वा ॥ 'वनं काननीरयोः ॥ प्रवासे निरये चापि वने प्रस्रवणेपि चे'ति विश्वः ॥ स्वभुजप्रतापरूपे वह्नौ अहौषीत् ॥ पक्षे ॥ देवदत्तनाम्ना अग्निदत्तशंखेन अक्षीणैः बाणैरु-

निजविक्रमनिर्धूतपर्जन्यशरसंहतिः ॥
सपन्नगांस्तार्क्ष्य इव द्रावयामास दानवान् ॥४॥
दिवः सकृत्वामयशान्तिमेव प्रणीतगुप्तिर्हरिणा कृतश्रीः ॥
पुनः प्रपेदे निजराष्ट्रमेव रामाननालोकनलम्पटात्मा ॥५॥
स्वर्गमार्गस्य मित्रं या सा भर्तृवरयोगतः ॥
तुतोष दयिता भक्तिविनमत्तनुमध्यमा ॥ ६ ॥

ज्ज्वलौ तूणावग्निदत्तेषुधी धारयति तच्छीलः द्विषद्भिः दैत्यैः सर्पैश्चोग्रं वनं खाण्डवाख्यं मूर्तौ स्वबाहुप्रताप इवाग्नौ ॥ ३ ॥

निजेति ॥ स्वपराक्रमेण दूरीकृता निरन्तरतया पर्जन्यतुल्यानां शराणां स्वयमेवेन्द्रशत्रुक्षपणात् पश्चात्कृता तद्बाणानां वा संहतिर्येन स दशरथो दानवान् द्रावयामास । तार्क्ष्यः सर्पानिव ॥ 'पर्जन्यः शरवर्षयो'रित्यमरः। पक्षे निजविक्रमेण निर्धूतः पर्जन्य इन्द्रप्रयुक्तवृष्टिर्यया सा शरसंहतिर्यस्य सोऽर्जुनः सर्पान्दैत्यांश्च सुपर्ण इव द्रावयति स्म ॥ ४ ॥

दिव इति । दिवः स्वर्गस्यामयशान्तिं पीडोपशमं कृत्वा कृतरक्षः हरिणा इन्द्रेण कृतश्रीः स दशरथो रामस्य पुत्रस्यालोकने लम्पटः सतृष्णो आत्माऽस्य पक्षे दिवः स्वर्गात् स्वराष्ट्रं प्राप । दिवः द्योतमानाद्व्रह्मेः मयस्य दैत्यशिल्पिनः शान्ति रक्षणं कृत्वा वा। दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिष्वित्युक्तेः । हरिणा कृष्णेन कृतरक्षः सम्पन्नशोभश्च दिवः स्वर्गस्य प्रकर्षेण नीता दूरीकृता गुप्तिर्येनेति वा । हरिणा कृतश्रीः सोर्जुनः रामायाः द्रौपद्याः ॥ ५ ॥

स्वर्गेति । स्वर्गे सहनीतत्वात्तन्मार्गस्य मित्रं या मध्यमा दयिता कैकयी सा तत्रोपचीर्णा(त्) तुष्टभर्तृदत्तवरयोगात् तुतोष । भक्त्या विनमच्छरीरं यथा स्यात्तथा। पक्षे । सुष्ठु अर्ज्यते स्वर्ग

महार्हमुक्तामयसंविधाना
प्रकामरम्या मणिदारुचित्रा ॥
सभा कुमाराधिगता नृपेण
भेजे सुधर्मेण सुराधिपेन ॥ ७ ॥

इष्टावाप्तिकृतोपायः स देवर्षिकृतादरः ॥
भीमोद्यमपरः काले जरासन्धारितामगात् ॥ ८ ॥

वृद्धभावं गतस्यापि तस्य पृथ्वीपतेः परैः ॥
दुःप्रदर्शमभूत्तेजो नैदाघस्येव भास्वतः ॥ ९ ॥

स्त्रिवर्गस्तस्य मार्गान्वेषण उपायः तस्य मित्रं सहायः त्रिवर्गसाधने दम्पत्योः सहाधिकारात् सा द्रौपदी ॥ भर्तृवरस्यार्जुनस्य भक्त्या विनमदतिसूक्ष्ममध्यमं यस्याः भक्त्या विनमन्ती चासौ तनुमध्या चेति भक्त्या रचनयेति वा । 'मध्यमं चावलग्नं च मध्यो स्त्री'त्यमरः ॥ ६ ॥

महार्हेति ॥ बहुमूल्येन मौक्तिकमयेन संविधानेन रचनाविशेषेण प्रकाममत्यन्तं रम्या कुमारेणाधिष्ठिता सभा स्कन्दाधिष्ठिता देवसभा इन्द्रेणेव दशरथेन भेजे । पक्षे । महार्हमौक्तिका मयस्य दैत्यशिल्पिनः संविधानेन कौशल्येन कुमारेणार्जुनेन युक्ता नृपेण युधिष्ठिरेण ॥ ७ ॥

इष्टेति । आकाङ्क्षितस्य प्राप्तौ कृतसाधनो देवैः ऋषिभिश्च कृतादरो भयङ्करोद्योगपरो दशरथः समये जरासन्धारितां वार्धकग्रस्ततां प्राप । पक्षे स युधिष्ठिरः इष्टस्य राजसूयस्य यज्ञस्य प्राप्तौ कृतोपायः देवर्षिणा नारदेनोत्पादिततदादरः । भीमसेनस्योद्योगे तत्परः श्रेष्ठो यस्येति वा काले यथोचितसमये जरासन्धस्यारितां घातकत्वं प्राप भीमेन तमघातयत् ॥ ८ ॥

वृद्धेति । वृद्धभावं वृद्धतां । पक्षे । क्षमां पाण्डित्यं वा ॥९॥

अथाश्वमेधेन परं मरुत्तः
पूर्वं यथा यष्टुमियेष भूपः ॥
स राजसूयेन यथा च पूर्वं
राजा हरिश्चन्द्र उदारकीर्तिः ॥ १० ॥

स चतुरङ्गयुतं व्यसृजद्द्विषां
मनुजवर्गमधृष्यमुदायुधम् ॥
क्षितिपरिक्रमणाय ततोमुना
कइह नाम परो न पराजितः ॥ ११ ॥

आ प्राच्याज्जन्हुकन्याजलभरजनित डम्बरादम्बुराशे-
रा च प्रत्यग्रचैत्रानिलललितलतास्पन्दिनश्चन्दनाद्रेः ॥
आ पाश्चात्याच्च लक्ष्मीपतिरचितनिजावासमुद्रात्समुद्रा-
दा च स्वःसोदरेभ्यऽस्तमुदजुषत भूरुत्तरेभ्यः कुरुभ्यः१२

अथेति । स दशरथः अश्वमेधेन तथा यष्टुं परं इयेष । यथा मरुत्तः यथा वा राजसूयेन हरिश्चन्द्रः ॥ पक्षे । युधिष्ठिरो राजसूयेन परं श्रेष्ठं यथा स्यात्तथा यष्टुमैच्छत् । यथा पूर्वं हरिश्चन्द्रः यथा चाश्वमेधेन मरुत्तः ॥ १० ॥

सेति । स दशरथः तुरङ्गेण युक्तं द्विषां शत्रूणां अधृष्यं मनुजानां शूरपुरुषाणां वर्गं भूमिपराक्रमणाय प्राहिणोच्च । अमुना वर्गेण राज्ञा वा ॥ पक्षे स युधिष्ठिरः हस्त्यश्वरथपादातरूपचतुरङ्गसैन्ययुतं वैरिणामधृष्यं अनुजानां भीमादीनां वर्गम् ॥११॥

आप्राच्येति । 'आडम्बरः समारम्भे गजगर्जिततूर्ययोरि'ति विश्वः । स्पन्दः कम्पः स्वःसोदराः स्वर्गतुल्याः । सर्वत्राभिविधावाङ् ॥ तं दशरथं युधिष्ठिरं च उदजुषत अप्रीणयत् असेवतेति वा । जम्बूद्वीपे अप्रतिहताज्ञोऽसावभूदिति भावः ॥ १२ ॥

कुमारशक्त्या करदीकृतायां
क्षितावपश्यन्स्वभुजेन साध्यम् ॥
अजातशत्रुर्नियमेन राजा
यज्ञैर्दिवं जेतुमुवाह दीक्षाम् ॥ १३ ॥

विधिमनुसरन्प्राग्वंशस्थस्तथा स महीपति-
र्व्यतनुत हविर्धारावृष्टिं त्रिविष्टपतुष्टये ॥
सलिलममलं स्फारासारैर्यथाविसृजन्नपि
ध्रुवमनृणतां प्राप्तो नाद्याप्यमुष्य पुरन्दरः ॥१४॥

सन्तर्पयामास दिवं हविर्भि-
र्द्विजेन्द्रमुख्यानपि दक्षिणाभिः ॥
वसुप्रदानैर्वसुधामशेषां
यशोभिरच्छैर्भुवनानि सप्त ॥ १५ ॥

निस्पृहः स्वशरीरेपि तथानर्च्य स ऋत्विजः ॥
यथा ते धनसम्पत्त्या कुबेरमिव मेनिरे ॥ १६ ॥

आराधितस्तेन मखे पुरस्तान्मनुष्यमूर्त्या विहितावतारः ॥
जगत्त्रयस्याशिशुपालकत्वं समादधे स्वेन बलेन विष्णुः १७

कुमारेति । अजातकल्पाः शत्रवो यस्य स दशरथः । पक्षे कुमारा भीमादयः 'धर्मपुत्रोजमोढश्च कर्णानुजयुधिष्ठिरौ । अजातशत्रुः कङ्कश्चेति' त्रिकाण्डशेषः ॥ १३ ॥

विधीति । 'प्राग्वंशः प्राग्हविर्गेहादि'त्यमरः॥१४॥१५॥१६

आराधित इति । तेन दशरथेन पुरस्ताद्वैष्णवयज्ञे आराधितः अत एव मनुष्यमूर्त्या कृतावतारो विष्णुः श्रीरामः जगत्त्रयस्य अशिशुपालकत्वं बालाऽपाल्यत्वं स्वतेजसा समाहितवान् ॥ नहीश्वरस्य बाल्येन पालनशक्तिः प्रतिबध्यते ॥ यद्वा आशिशु बालानभिव्याप्य जगतः पालकत्वं दधे । पक्षे। युधिष्ठिरेण रा-

मखावसाने मघवत्समानो
यथोचितं योजितमानपूजान् ॥
विशाम्पतिर्भूमिपतीन् विसृज्य
शान्तोपसर्गामवनीं शशास ॥ १८ ॥

तथा भूलोकचन्द्रस्य समृद्धिरतिवासवा ॥
ज्योत्स्नेव चक्रवाकानामासीद्दुःखाय दुर्हृदाम् ॥१९॥
अतर्कितागाधजले पतितस्य पराभवे ॥
तद्विपक्षजनस्यासीद्धृदि चिन्तामयो ज्वरः ॥ २० ॥
वर्त्तमानो वयस्यन्ते प्रज्ञादृगथ भूपतिः ॥
ज्येष्ठे निजसुते लक्ष्मीमाधातुंमतिमादधे ॥ २१ ॥
अभिरामं प्रवृत्तापि कुलज्येष्ठमपोह्य तम् ॥
पृथुला भरतं लक्ष्मीर्दुर्योधनमियेष सा ॥ २२ ॥

जसूये राजान्तरेभ्यः प्राक् कृतार्घ्यपूजो यदुकूले कृतावतारः कृष्णो जगतः शिशुपालशून्यतां चक्रे तं जघानेत्यर्थः ॥ १७ ॥
॥ १८ ॥ १९ ॥

अतर्कितेति । अतर्कितागाधजल इव पराभवे पतितस्य दशरथशत्रुवर्गस्य हृदि चिन्तारूपोऽभूत् । अतर्कितदोषे वङ्गदेशादिजले कृतस्नानादेः शीतज्वर इवेति ध्वनिः । पक्षे । दुर्योधनस्य जले स्थले भ्रमेण गच्छतो अतर्किते तत्र यथा पातस्तथैव तन्निमित्तकपराभवेपीति भावः ॥ २० ॥

वर्त्तमानेति । ज्येष्ठे रामे पक्षे प्रज्ञादृक् जात्यन्धो धृतराष्ट्रः । निजसुते दुर्योधने ॥ २१ ॥

अभिराममिति । अभिराममभिलक्षीकृत्य प्रवृत्तापि पृथुला महती लक्ष्मीः दुःखेन योधनीयं भरतमैच्छत् । पक्षे धर्मराजे प्रकर्षेण वर्तमानापि लक्ष्मीः अभिरामं सर्वगुणसंपन्नं त्यक्त्वा पृथुला भरतमतिसन्ततं गच्छति स्म ॥ २२ ॥

सुधीरसौबलोद्योगाद्राजा देवनतः श्रियम् ॥
धर्मपुत्रे स्थिरां व्याजैर्विना कर्तुं मनो दधे ॥ २३ ॥
भरतज्यायसो दीप्ता दायादजननीतया ॥
द्यूतकेल्या नलस्यैव लक्ष्मीर्मन्थरया हृता ॥ २४ ॥
दुःशासनावलेपेन भरतानिष्टकारिणा ॥
तस्य लक्ष्मीर्विपक्षेण कृष्टा कान्ता कचेष्विव ॥२५॥

सुधीति । बलोद्योगात् अत एव देवैर्नत इति वा धर्मपुत्रे धर्मात्मनि व्याजैर्विनापि निःकपटं स्थिरां कर्त्तुमैच्छत् । पक्षे । सुधियं सद्बुद्धिं ईरयति क्षिपति दूरीकरोतीति सुधीरो दुर्बुद्धिस्तस्य सौबलस्य शकुनेरुद्योगात् देवनतो द्यूतेन पाशकेन वा । 'अक्षास्तु देवनाःपाशकाश्च ते'इत्यमरः। राजा धृतराष्ट्रः युधिष्ठिरे स्थिरां श्रियं कपटपाशप्रयोगादिभिर्व्याजैः कैतवैर्विना कर्त्तुमपनेतुं मनो दधे ॥ २३ ॥

भरतेति । भरतज्यायसो भरताग्रजस्य रामस्य दीप्ता लक्ष्मीः दायादजननीं कैकयीं इता प्राप्ता तया इता सम्मता तया वा मंथरया तद्दास्यहृता ॥ दायादजनेन पुष्करेण नीतया प्रापितया द्यूतकेल्या नलस्येव। पक्षे ॥ युधिष्ठिरस्य लक्ष्मीः दुर्योधनाद्युपस्थापितया मन्थमुपतापं रातीति मन्थरा तया द्यूतकेल्या हृता नलस्येव मन्थरमलक्षितं यातीति मन्थरया मन्थः रयो वेगो यस्याः सेति च लक्ष्मीविशेषणं वा तत् ॥ २४ ॥

दुःशासनेति ॥ दुष्टं शासनं मन्थरया दुर्मन्त्रं यथेच्छासि तथा कुर्वीति दशरथस्य दुराज्ञा वा तत्प्रयुक्तेनावलेपेन कैकेयी गर्वेण भरतस्य तत्पुत्रस्याप्यनिष्टकृती विपक्षे कैकेयीरूपेण रामस्य लक्ष्मीः कृष्टापनीता ॥ पक्षे ॥ दुःशासनो दुर्योधनभ्राता तस्यावलेपेन भरतानां सर्वेषामप्यनिष्टकारिणां तेनव

नैव सभ्या न गुरवो न मित्रज्ञातिबान्धवाः ॥
तन्निवारयितुं शेकुर्वर्तमानं महानयम् ॥ २६ ॥
गुरुभिः कल्पितं सोथ वत्सरादा चतुर्दशात् ॥
आरण्यकव्रतं धीरः सानुजः प्रत्यपद्यत ॥ २७ ॥

स राज्यमैन्द्रेण पदेन तुल्यं
गुरुप्रियार्थं तृणवद्विधाय ॥
अरण्यवासोपधृतप्रतिज्ञः
सम्प्रस्थितः सावरजः सदारः ॥ २८ ॥

आपोढरत्नाभरणं रथेन निर्यातमेनं नगरान्निरीक्ष्य ॥
विमोक्तुमश्रूणि चिरं जनानामासीन्न पर्याप्तमिवाक्षियुग्मम् २९
राजेन्द्रवेषापगमेपि नैनं सौभाग्यलक्ष्मीः श्लथयाम्बभूव ॥
सुरासुरैः स्वीकृतरत्नराशिस्तथापि रत्नाकर एव सिन्धुः ३०

विपक्षेण युधिष्ठिरस्य लक्ष्मीः कृष्टा ॥ कचेषु कान्ता द्रौपदीव ‘ अवलेपस्तु गर्वेस्याल्लेपने दूषणेपि चे’तिविश्वः ॥ २५ ॥२६ ॥

गुरुभिरिति ॥ कैकय्यादिभिः आचतुर्दशात् चतुर्दशसंवत्सरमभिव्याप्य मर्यादीकृत्य च चतुर्दश त्रयोदश वर्षाणीत्यर्थः ॥ आरण्यकस्य मुनेर्व्रतं जटाधारणादि ॥ ‘अरण्यान्मनुष्य’ इति वुञ् ॥ स रामो युधिष्ठिरश्च। अनुजो लक्ष्मणो भीमादयश्च ॥ २७ ॥

स राज्यमिति ॥ गुरुप्रिया कैकेयी यद्वा गुरुर्दशरथस्तदाज्ञाकारणात् तत्सत्यरक्षाणाद्वा तत् प्रियार्थं यथा स्यात्तथा वनवासाय धृतप्रतिज्ञः लक्ष्मणसीतासहितः ॥ पक्षे धृतराष्ट्रस्य प्रियार्थं वनवासायप्रतस्थे ॥ धृतकौरववधप्रतिज्ञः भीमादिद्रौपदीसहितः ॥ २८ ॥

अपोढं अपगतम् ॥ २९ ॥ ३० ॥

स्थितेऽप्युदग्रे पुरुराजवंश्ये
ज्यायांसमेनं न जहौ जनौघः ॥
द्वारोपकण्ठस्थितशङ्करोऽपि
बाणः किमासीद्भुवनस्य पज्यः ॥ ३१ ॥

राष्ट्रादन्तःकलहकलुषान् मथ्यमानादिवाब्धे-
स्तन्वी बालाकिसलयमृदुर्निर्गताप्युज्ज्वलाङ्गी ॥
भर्तृप्रेम्णा वनभुवमभिप्रस्थिता राजकन्या
शम्भोर्जूटं नवशशिकला संश्रयन्तीव रेजे ॥ ३२ ॥

निरस्तसर्वाभरणापि गेहाद्विनिर्गता सा निजयैव भासा ॥
विद्योतयामास नरेन्द्रमार्गं तडिल्लता मेघविनिःसृतेव॥३३॥

बाष्पाम्बुजम्बालितराजमार्गैः सगद्गदव्याहृतसाधुवादैः ॥
विलोकिता पौरजनैरसूर्यंपश्यापि मध्येनगरं व्रजन्ती ॥३४॥

स्थिते इति ॥ दशरथेऽपि स्थिते भरतं त्यक्त्वा राममेव सर्वलोको गतः न हि दशरथमाहात्म्येन भरतो मान्यः । पक्षे धृतराष्ट्रेऽपि स्थिते दुर्योधनमनादृत्य युधिष्ठिरं लोको भेजे॥३१॥

बाला नवयौवना 'बालास्यात्षोडशाब्दा तदुपरितरुणी त्रिंशतंयावदूर्ध्वं प्रौढा स्यात्पञ्चवर्षतदवधिपरतो वृद्धातामेति नारी'-ति विशेषो नादर्त्तव्यः । भर्त्ता रामो युधिष्ठिरादिश्च ॥ राजकन्या सीता कृष्णा च ॥ जूटो जटाकलापः ( कला ) तनुत्वादिविशिष्टा ॥ ३२ ॥

बाष्पाम्बुजमिति ॥ जम्बालितः कर्दमितः'जम्बालः शैवले पङ्के' इति मेदिनी ॥ सा सीता द्रौपदी च ॥ अवर्जनीयदर्शनं सूर्यमपि न पश्यतीत्यतिगुप्तापि परैर्व्यलोकि ॥ 'असूर्यललाटयोर्दृशि तपो'रिति खश् । अत एवासामर्थ्येऽपि समासः । नगरस्य मध्ये इति मध्येनगरं 'पारे मध्ये षष्ठ्या वे'त्यव्ययीभाव ॥ ३३ ॥ ३४ ॥

कृतानुयात्रः सहमित्रबन्धुभि-
र्निवर्त्य भूपो नगराय नैगमान् ॥
स धर्मजन्मा निजकीर्त्तिनिर्मलां
सुरापगां प्राप सुमन्त्रसङ्गतः ॥ ३५ ॥

तां यज्ञसेनाप्रभवां पुरन्ध्री-
धुरन्दधानां व्यसनाभिभूताम् ॥
आश्वासयन्तीव सहंसवाणी
पस्पर्श गङ्गालहरीसमीरैः ॥ ३६ ॥

कृतानैगमाः नागराः 'निगमः स्यादुपनिषद्वाणीजो नगरेपि चे'ति मेदिनी। धर्मवर्द्धनं जन्म यस्य सः 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारते'ति भगवदुक्तेः धर्मजन्मा रामः। धर्मात्मजो युधिष्ठिरश्च ॥ स्वयशोवन्निर्मलां स्वकीर्त्तनेन पापक्षयकरीं स्व-कर्द्दमेन मलशून्यां वा वर्षकृतं दुर्भिक्षवत्तदभावकृतेपि तत्कृतव्य-वहारः ॥ 'निजमात्मीयनित्ययोः' 'कीर्त्तिः स्याच्छब्दयशसो विस्तारे कर्द्दमेपि चेति' विश्वः। सुमन्त्रेण पितृसारथिना शोभ-नमन्त्रयुक्तैर्मुनिभिश्च सहितः 'मन्त्रे वेदप्रभेदे स्याद्देवादीनां च साधने। गुप्तवादे चे'ति विश्वः ॥ ३५ ॥

तामिति ॥ 'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ॥ समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छती'ति मनूक्तज्ञानयज्ञः सेना-सर्वानर्थनिवृत्तिसाधनं यस्य स यज्ञसेनो जनकः प्रभवः पिता अस्यास्तां सीतां 'अथ कुटुंबिनी पुरन्ध्री'त्यमरः॥ 'व्यसनं वि-पदि भ्रंशे दोषे कामजकोपजे' इत्यमरः ॥ हंसस्य शब्देन तु सर्वसिद्धि'रिति घसन्तराजः। पक्षे। यज्ञसेनो द्रुपदः तां कृष्णां यज्ञभूमिमिति पाठे यज्ञियक्षेत्रवेदिश्च ॥ ३६ ॥

गुहानुबन्धाद्गहनं वनं स
प्रविश्य चीरी जटिलो जटालैः ॥
समीयिवान्सावरजो मुनीन्द्रैः
सतां हि सङ्गो व्यसनार्णवे नौः ॥ ३७ ॥
वसन् शून्य इवारण्ये नगरे तद्गुरुर्जनः ॥
तद्वियोगपरिक्लेशाच्छ्रेयो मृत्युरमन्यत ॥ ३८ ॥
तदा शुभरतेनाथ पश्चात्कृतनरश्रिया ॥
कुलज्येष्ठो वने तिष्ठन् भेजे क्षत्रोचितं क्रमम् ॥३९॥
उद्दामधीरतरलो भरतेन भीम-
सैन्येन दूरमनुयातवता वनान्तम् ॥
रक्तप्रजामपि निजां नगरीमुपेतुं
संप्रार्थितोपि न मनः शिथिलं चकार ॥४०॥

गुहेति ॥ गुहो निषादपतिः गहनं दुस्तरं वनं गङ्गाजलं प्रविश्य प्रवेशकपूर्वमुत्तीर्य। चीरं वल्कलं। जटाः संजाताः अस्य जटिलः। पक्षे दरीसंबन्धाद्दुर्गमं वनमरण्यं। 'गहनं विपिने वनं च दुर्गे गह्वरे सलिलेपि चे'ति विश्वः ॥ 'वनं काननतीरयो'रिति षाण्मातुरे निषादे च गुहो गुहा च गह्वर'इति शाश्वतः ॥ मुनीन्द्रा भारद्वाजादयो बृहदश्वादयश्च ॥ ३७ ॥ ३८ ॥

तदा अथ पितृमरणानन्तरं आशु शीघ्रं मातामहकुलादागत्य निरस्तराज्यलोभेन भरतेन तिष्ठन् कुलज्येष्ठो रामः क्षत्रस्योचितक्रमं यथा स्यात्तथा भेजे सिषेवे ॥ ज्येष्ठेधिकारिणि कनिष्ठस्य राज्यानपेक्षत्वं क्षत्रियस्योचितक्रमः 'क्षत्रोपि क्षत्रियो भवेदिति'कोशः। पक्षे। शुभे कल्याणे रतेन त्यक्ता धृतराष्ट्रे श्रीर्येन ॥ क्षत्रा विदुरेण धर्मपक्षपातित्वादुचितक्रमं युधिष्ठिरो भेजे ॥ सोपि हितोपदेशममृष्यमाणेन भ्रात्रा तिरस्कृतो वनमागतः ॥ ३९ ॥

उद्देति। महामतिरचञ्चलः स रामः सह सैन्येन दूरं वनान्तं

तं राजाज्ञां दधानोथ विपुलांसं जयस्थिरम् ॥
वनान्निवर्त्तयामास कथंचिद्विदुरं सुधीः ॥ ४१ ॥

प्रभ्रंशं कथमपि लम्भितस्य दैवा-
त्साभर्त्तुः समुपगमं समीक्ष्यमाणा ॥
दायादं तदनु तदीयमेव लक्ष्मी-
र्नाकश्रीरिव नहुषं निषेव्यते स्म ॥ ४२ ॥

ते चित्रकूटाचलपादभाजां
मलश्रियालंकृतदण्डकानाम् ॥
क्रमेण भेजुः श्रमनाशनानि
तपस्विनामाश्रमण्डलानि ॥ ४३ ॥

गच्छता भरतेनानुरक्तलोकामयोध्यां गन्तुं प्रार्थितोपि मनो न श्लथयाञ्चकार ॥ अर्थाद्वनवासात् । पक्षे उद्दामउच्छृङ्खलो धीरतरः लोभतरश्चेति कर्मधारयः स युधिष्ठिरः भीमेन मुहुरुद्दीप्यमानोपि वनमेवाश्रयत ॥ ४० ॥

तामिति राज्ञो दशरथस्याज्ञां दधानो रामः उन्नतस्कन्दं जये सुस्थिरं विदुरं ज्ञातारं तं भरतमपि कथंचिद्वनान्न्यवर्त्तयत् ॥ पक्षे विपुलां महतीं धृतराष्ट्राज्ञां दधानः संजयःस्थिरबुद्धिः 'विदुरो नागरे धीरे कौरवाणां च मंत्रिणीति' विश्वः ॥ ४१ ॥

प्रभ्रेति ॥ दायादं भरतं दुर्योधनं च । भर्त्तुः रामस्य युधिष्ठिरस्येंद्रस्य च ॥ ४२ ॥

तइति । ते च रामादयः चित्रकूटः शिखरी 'दण्डको दण्डकारण्ये काम्यकर्मणि च स्मृतः' इति शब्दार्णवः ॥ 'अलंकृतकाम्यकाना'मितिपाठे ॥ अलमत्यर्थं कृतं काम्यं इष्टार्थदं कर्म यैस्तेषां पक्षे काम्यकं वनविशेषः ॥ ४३ ॥

अवरोपितराज्येपि भर्तर्येकरसा यतः ॥
तेन निन्ये परां शोभां तद्वधूरनसूयया ॥ ४४ ॥

क्षणेन तेषां क्षणदाचरः क्वचि-
द्विराधनामारचयन्महायुधः ॥
अरुन्ध पन्थानमरुन्तुदः सतां
पुराग्रहाणामिव विन्ध्यभूधरः ॥ ४५ ॥

युद्धारब्धश्चण्डदोर्दण्डघातैर्भिन्दन्सांधिं द्रागविनिष्पीड्य भूमौ ॥
संरम्भोद्यत्पांसुकिर्मीरमेनं रक्षोनाथं राक्षसारिर्ममन्थ ॥४६॥

रक्षसां भयदानेन तैरलंकृतदण्डकैः ॥
सुतीक्ष्णशरभङ्गाढ्याः सहसा वनभूरभूत् ॥ ४७ ॥

अवेति । तस्य रामस्य वधूः सीता राज्यभ्रष्टेपि पत्यौ यत एकरसा अविकृतबुद्धिस्तेन कारणेन अनसूयया अत्रिपत्न्या उत्कृष्टां शोभां दिव्याङ्गरागादिदानेन प्रापिता । पक्षे द्रौपदी असूयाराहित्येन ॥ ४४ ॥

क्षणेनेति । तेषां रामादीनां विराधनामा राक्षसः महान्ति युद्धानि रचयन् मार्गमरुणत् ॥ 'समुदायः स्त्रियः संयत्सामित्याजिसमिद्युधः' इत्यमरः ॥ 'अरुन्तुदस्तु मर्मस्पृक्' इति च । पक्षे विराधानां विरोधं आचरयन् महाशस्त्रः ॥ ४९ ॥

युद्धेति ॥ आरब्धयुद्धः रक्षोवैरिणं संभरणोद्यद्भिः पांसुभिः कर्बूरवर्णं एनं विराधं जघान 'किर्मीरो नागरङ्गे च कर्बूरे राक्षसान्तरे' इति विश्वः ॥ पक्षे संरम्भेत्यादि विशेषणं किर्मीरो-बकभ्राता राक्षसारिर्भीमः ॥ ४६ ॥

रक्षसामिति ॥ तैः रामादिभिः दण्डकं अरण्यं । सुतीक्ष्णशरभङ्गौ मुनिविशेषौ । पक्षे तैः युधिष्टिरादिभिः दण्डकः काम्यकर्म सुतीक्ष्णानां शराणां भङ्गैराढ्या ॥ ४७ ॥

तं प्रत्यगृण्हन्नातिथ्यैर्मुनयो मनुजेश्वरम् ॥
स्वकालसम्भवैः पुष्पैः कामदेवमिवर्त्तवः ॥ ४८ ॥

इति श्रीकविराजराघवपाण्डवकाव्ये रामपाण्डवनवप्रस्थानं नाम तृतीयः सर्गः समाप्तः ॥ ३ ॥

—:०:—

## चतुर्थः सर्गः

अथारिवर्गं नरदेवसम्भवो
निराकरिष्यन् परमास्त्रतेजसा ॥
उदग्रधन्वा गुरुकार्यमुद्वहन्
वनान्तरं प्राप शिवोपलब्धये ॥ १ ॥

तंप्रति रामं युधिष्ठिरं च कामदेवः स्मरः काव्यप्रयोजकश्च ॥ ४८ ॥

आवश्यकपदश्लेषव्याचिख्यासावशात्मनः ॥
लक्ष्मणस्य कृतौ सर्गस्तृतीयः समपद्यत ॥ ३ ॥

इति राघवपाण्डवीयकाव्यटीकायां तृतीयः सर्गः ॥ ३ ॥

—:०—

श्रीगणेशाय नमः ॥ अथ राजपुत्रो रामः परमास्त्राणां विश्वामित्रोपदिष्टानां तेजसा रिपुवर्गं निराकरिष्यन् गुरु महद्राक्षसवधरूपं गुरूपदिष्टं वनवासं वा निर्वहन् कल्याणलाभाय वनान्तरं प्राप ॥ पक्षे । नरश्चासौ देवसंभवश्च सोर्जुनः अरिवर्गं कर्णादिरिपुवर्गं । परमास्त्राणि लिप्सितानि पाशुपतादीनि ॥ गुरुर्युधिष्ठिरः तदुपदिष्टं शिवाराधनकार्यं शिवस्य शम्भोर्दर्शनाय वनान्तरं प्रवासान्तरं "प्रवासे निलये चापि वनं प्रस्रवणेपि चे"ति विश्वः ॥ 'शिवं मोक्षे सुखे मोदे सलिलेपि शिवो हरे ॥ वेदे योगान्तरे कीले वालुके गुग्गुलेपि चे'ति ॥ १ ॥

वराहवाधिरोपेण तपोभिर्भावितः पुरः॥
तेनागस्तिरयन् दृष्टो वनेचरवपुः प्रभुः ॥ २ ॥
निबद्धतूणः कवची धनुष्मान्
महर्षिशंस्यां समितिं प्रविष्टः ॥
असौ मृगव्याधवपुर्धरेण
हरेण तुल्यो मुनिभिर्व्यलोकि ॥ ३ ॥
तमग्रतो दर्शितविग्रहं प्रभुं
कृतप्रसादं प्रणिपत्य मौलिना ॥
सकुम्भजन्मानमवाप्य शङ्करा-
त्ततो धनुर्वेदमयं समाददे ॥ ४ ॥

वराहवेति ॥ उत्कृष्टसंग्रामेऽधिरोपः आधिक्यं तनोद्देशेन हेतुना तेन रामेण तपोभिः सिद्धः पुरः अयन्नागच्छन् 'इटकिटकटी'त्यत्र प्रश्लिइष्टधातुः शत्रन्तः। वनेचरः आरण्यको मुनिस्तद्वद्वपुर्यस्य ॥ ' तत्पुरुषेकृतिवहुल ' मिति अलुक् ॥ प्रभुः प्रभावसंपन्नः अगस्तिर्दृष्टः ॥ पक्षे ॥ पुरः प्रथमं वराहं तद्रूपं मूकदानवं बाधते तच्छीलो रोपः शरो यस्य तेनार्जुनेन तपोभिराराधितः अतएव तदागः प्रथमवराहे वेधरूपं तिरयन् अगणयन् वनेचरवपुः किरातवेषः प्रभुः शिवः साक्षात्कृतः वनेचरवपुषां प्रभुरिति वा ॥ २ ॥

निबद्धेति ॥ महर्षिभिः प्रशंसनीयां समितिं सभां प्रविष्टोसौ रामः मुनिभिः। मृगं विध्यतीति कर्मण्यण्। मृगव्याधो लुब्धकस्तद्वपुर्धरेण तुल्यो विलोकितः ॥ समितिः सम्पराये स्यात्सभायां सङ्गतेपि चे'ति मेदिनी ॥ पक्षे समितिः संग्रामः किरातवेषेण युयुत्सुना शिवेन तुल्यो न तु ततो न्यूनः ॥ ३ ॥

तमिति ॥ अग्रतः पुरतः दर्शितस्वरूपं कुम्भजन्मानमगस्त्यं

इति स विबुधविद्विड् घस्मराद्ब्रह्मयोने-
रधिगतपरमास्त्रोद्भासितूणीकृपाणः ॥
अभिलषितजयश्रीर्नाकधाम्नां निकायै-
र्वनभुवि कृतवासः स्वस्थतां संप्रपेदे ॥ ५ ॥

मौलिना प्रणम्य अवाप्ये प्राप्तव्ये भाविरावणयुद्धे शं सुखं करोति तच्छीलात्ततो धनुर्वेदं सोयं रामः समाददे ॥ अयं शुभावहविधिरूपं वेति प्रपञ्चः ॥ धनुर्वेदः प्राचुर्येण प्रकृतो यस्मिंस्तत् ॥ 'अक्षय्यशरतूणीरावसिं चापं महाशरामि'त्यस्मदीयरामायणोक्ततूणादिधनुर्वेदमयमिति तु युक्तं ॥ पक्षे प्रथमं कृतयुद्धं ततः कृतप्रसादं शिवं प्रणिपत्य मौलिना कुं भूमिं भजन् सोर्जुनः शंकराच्छिवान्मानं सन्मानं पाशुपताद्यस्त्रज्ञानं वा प्राप्य । ततः वेत्तीति वेदः पचाद्यच् । वेदो मयो यस्य तत् वेदमयं खाण्डवदाहे तत्प्रभावपरितुष्टादग्नेर्मयस्य मोचित्वात्तत्त्द्विदितसामर्थ्यं धनुः गाण्डीवं तेन निगीर्णं पुनः प्राप ॥ यज्ञभागालाभकुपितेन रुद्रेण यज्ञमृगवेधाय सृष्टं ॥ 'लोके यज्ञविघातार्थं कपर्दी विदधे धनुः ॥ वषट्कारोभवज्ज्यानुतुधनुषस्तस्य भारत ॥ यज्ञाङ्गानि च चत्वारि तस्य सन्नहने भवन्' ॥ इत्यैषीकपर्वान्ते प्रसिद्धं शिवोपदेशाज्जग्राहेति वा ॥ ' अशोभत तदारामो धनुर्विस्फारयन्महत् ॥ भगवानिव संक्रुद्धो भवो वेदमयं धनु'रिति रामायणादिषु तस्य वेदमयत्वेन प्रसिद्धेः ॥ वेदमयं तुल्यं गाण्डीवमिति तु युक्तं आरण्यके तद्धनुर्दानात् ॥ ' विग्रहः समरे काये विस्तारपविनाशयो'रिति विश्वः ॥ ४ ॥

इतीति ॥ वेदद्रुहां वाताप्यादिदैत्यानां भक्षकात् ब्रह्मयोनेस्तपःसंपन्नादगस्त्यात् प्राप्तपरमास्त्रः स चासावुद्भासिनौ तूणीकृपाणश्च यस्य सः ॥ 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः । तू

अर्जुनेन यशसानुलिम्पता
तच्चरित्रजनितेन दिक्तटीः ॥
अध्यरोहि बलविद्विषः सभा-
विह्वलीकृतसुरारियोषिता ॥ ६ ॥
तस्मिन्दुरापे वसतः प्रदेशे
लब्धास्त्रजातस्य मनोभवान्धा ॥
तस्योर्वशी तुल्यविलासवेषा
निशाचरी सन्निधिमाजगाम ॥ ७ ॥

ण्या'मित्यमरः ॥ वनस्थः स रामः स्वस्थतां स्वास्थ्यं प्राप॥ पक्षे विबुधविद्विषोन्धकादयः ब्रह्मयोनेर्देवदेवात् स्वास्त्रदायिभिराशास्यजयः वनभुवि वसन्स्वर्गस्थितिं प्राप शिवप्रसादानन्तरं स्वर्गं जगामेत्यर्थः ॥ ९ ॥

अर्जुनेनेति । तस्य रामस्य चास्त्रजन्येनार्जुनेन शुक्लेन दिशां तटानि व्याप्नुवता विह्वलीकृतराक्षसीकेन यशसा इन्द्रस्य सभा अधिरूढा ॥ पक्षे अर्जुनेनेन्द्रसभाधिरूढा प्रसिद्धं चरित्रं ॥ येन यशसा दिशोनुलिम्पता विह्वलीकर्त्तुं प्रारब्धदैत्यस्त्रीकेण ॥ 'आदिकर्मणि क्तः' ॥ ६ ॥

तस्मिन्निति ॥ तस्मिन्दुरापे निर्जने पञ्चवटीरूपे प्रदेशे वसतो रामस्य समीपमुर्वश्या तुल्यौ विलासवेषौ यस्याः सा राक्षसी शूर्पणखा आजगाम ॥ पक्षे अतिदुर्लभे स्वर्गे स्थितस्य तस्यार्जुनस्य तुल्यौ रूपानुरूपौ विलासवेषौ यस्याः सा उर्वशी निशाचरी अभिसारिका 'निशाचरी पांसुलाया'मिति विश्वः विलास 'स्तात्कालिको विशेषस्तु विलासोङ्गक्रियोक्तिभि'रित्युक्तो हावविशेषः ॥ ७ ॥

अकामं चकमे सा तं तरुणं ज्यायसी सती ॥
वैषम्येन हि पुंनार्योर्घटनामृतजीविका ॥ ८ ॥
चुकोप सा भृशं तस्मै प्रातिकुल्यान्निराकृता ॥
कर्णनासापनोदोयं स्त्रीणां यदवमानना ॥ ९ ॥

सा सर्वलोकैरपि दुष्प्रधर्षा
विलक्ष्यतां प्राप्य तदा तदर्हा ॥
तत्पौरुषस्य प्रतिरोधकानि
व्याहृत्य वाक्यानि विनिर्जगाम ॥ १० ॥

अकाममिति ॥ सा शूर्पणखा तद्विषयककामरहितं तरुणं तं रामं चकमे ॥ ज्यायसी वृद्धा सती हि स्फुटं वैषम्ये पुंनार्योर्घटजामृतजीविका तद्वद्दुर्घटा । पक्षे सा उर्वशीतंमर्जुनं ज्यायंसीपौरवपरिग्रहत्वेन मान्या ॥ ८ ॥

चुकोपेति । सा शूर्पणखा निराकृता रामेण प्रत्याख्याता प्रतिकूलाचरणाल्लक्ष्मणकृतकर्णनासाच्छेदात्तस्मै रामाय भृशं चुकोप ॥ स्त्रीणां हि कर्णनासावसाद एवावमानना नतु वधः ॥ पक्षे अर्जुनेन निराकृता सोर्वशी स्त्रीणां हि अवमाननैव कर्णनासावसादः ॥ ९ ॥

सेति । सा शूर्पणखा तदर्हा तादृशदण्डयोग्या विगलं लक्ष्यमुद्देश्यं तदुपभोगरूपं यस्याः तस्याः भावस्तत्तां 'शरदः कृतार्थे'-तिवत्सामान्ये नपुंसकं तत्पौरुषस्य रामपराक्रमस्य प्रतिरोधकानि निराकरणार्थानि वाक्यानि उक्त्वा निर्ययौ ॥ पक्षे सोर्वशी अतदर्हा अवमाननाऽयोग्या विलक्ष्यतां विस्मयान्विततां 'विलक्ष्यो विस्मयान्वित' इत्यमरः ॥ तस्यार्जुनस्य पौरुषं पुंस्त्वं तस्य प्रतिरोधकानि षाण्ढ्यशापवाक्यानि ॥ १० ॥

कृतवैरास्ततस्तेन खरदूषणसङ्गताः ॥
निवातकवचास्तूर्णं जुघूर्णुः शक्रविद्विषः ॥ ११ ॥
जनस्थानं विसृज्याथ ते चास्थाने कृतोद्यमाः ॥
रणस्थानं जवाज्जग्मुर्यमस्थानोपकण्ठगाः ॥ १२ ॥
सान्द्रस्यन्दनवंशसिन्दुरघटागन्धर्ववृन्दोज्ज्वले
खड्गाढ्यप्रकराग्रपत्तिपृतनासम्पत्तिविस्तारिणि ॥
तं वीरं प्रतियाति वैरिनिकरे कल्पान्तकादम्बिनी
गम्भीरैरुदजृम्भि भीरुभयदैः संग्रामभेरीरवैः ॥१३॥
समन्तात्सेवन्त्यः समरपटहध्वानमचिरा-
द्यथा सन्तः कल्पद्रुमविरचनाविभ्रमभृतः ॥
नभोगर्भे चेरुर्मृधनिहतयोधग्रहपराः
कपोलोद्यत्स्वेदप्रकरकणिका दिव्यगणिकाः ॥ १४ ॥

कृतेति ॥ तेन रामेण शूर्पणखाविरूपकरणेन कृतवैराः खरदूषणाभ्यां सहिताः निवाताः शस्त्राभेद्याः कवचा येषां ते शक्रविद्विषो राक्षसास्तूर्णं शीघ्रं जुघूर्णुः बभ्रमुः ॥ 'घूणघूर्णभ्रमणे' ॥ 'निवातावाश्रयावातौ शस्त्राभेद्यं च वर्म यदि'त्यमरः ॥ पक्षे शक्रेण कृतवैरास्तैस्तैर्दोषैर्युक्ता निवातकवचा नाम दैत्याः ॥ ११ ॥

जनेति ॥ ते खरादयः जनस्थानं नासिकक्षेत्रं त्यक्त्वा अस्थाने स्वस्याविषये अजय्ये रामकृतोद्वेगाद्रणभूमिं जग्मुः ॥ यमस्थानोपकण्ठगाः मुमूर्षव इत्यर्थः ॥ पक्षे निवातकवचा जननं जनः तत्स्थानं जन्मभूमिं पञ्चजनदैत्यस्थानं वा समुद्रोपान्तभूलोकात्पञ्चमो लोको जनस्थानमिति कश्चित् ॥ १२ ॥

सान्द्रेति ॥ वंशः समूहः ॥ 'कुम्भीकुञ्जरवारणेभरदिनः सो मोद्भवःसिंधुर'इतिहलायुधः ॥ 'कारिणां घटनां घटे'त्यमरः ॥ वाजिवाहार्वगंधर्वे'त्यादि च । कल्पान्तः प्रलयः 'कादम्बिनी मेघमाले'त्यमरः ॥ १३ ॥ १४ ॥

जवनपवनपातैर्दिक्षु विस्तारितायां
बहलसमरधूलीवागुरायां निमग्नः ॥
परिमलिनितवक्त्रः शोचनीयामवस्था-
मभजत परितूर्णं रुद्धपादः पतङ्गः ॥ १५ ॥

अथोच्चलत्कलकलघोषभीषणं
तदागतं बलमवलोक्य विद्विषाम् ॥
उपाददे नरपतिनन्दनो धनु-
र्घनाघनः कुलिशभृदायुधं यथा ॥ १६ ॥

विसारिणीमपि जगतीन्द्रनन्दनो
महारथाक्रमणसमग्रविक्रमः ॥
रुरोध तां विबुधविरोधिवाहिनीं
महाम्बुधेर्मलय इवोर्मिसङ्गतिम् ॥ १७ ॥

तरस्विनां द्विरदरथाश्वचारिणां
विसृक्षतां प्रहरणपङ्क्तिमुज्ज्वलाम् ॥
विरोधिनामधिरणमेकलक्ष्यतां
चिरं दधौ नृपसुत एक एव सः ॥ १८ ॥

जवनेति ॥ वागुरा मृगबन्धिनी । 'पादारश्म्यङ्घ्रितुर्यांशाः' 'पतङ्गः शलभे शालिप्रभेदे पक्षिसूर्ययोः' ॥ १५ ॥

अथेति ॥ कुलिशभृदायुधं शक्रधनुः 'वर्षशब्दाघनाघना' इत्यमरः ॥ १६ ॥

विसारिणीति ॥ भूपतिपुत्रो रामः इन्द्रपुत्रोऽर्जुनः महारथानां वहत । इन्द्ररथस्य स्य च आक्रमणे पूर्णपराक्रमः ॥ १७ ॥

तरेति ॥ एकएव रामो लक्ष्यसंख्यातां दधौ ॥ पक्षे अर्जुनः शरव्यतां ॥ 'लक्ष्यं संख्याशरव्ययो'रित्यमरः ॥ १८ ॥

नियन्तृभिर्युधि पुरतः प्रधाविता
रथा पुनः पवनपराङ्मुखीकृतैः ॥
व्यदर्शयन्दिशमिव केतनांशुकैः
पराजये झटिति पलायनोचिताम् ॥ १९ ॥
अथापतन्नृपतनयस्य सर्वतः
पतिष्यतः शरनिकरस्य दूतिकाः ॥
अनादरादरिपृतनासु दृष्टयः
सरोजिनीष्विव रजनीपतेस्त्विषः ॥ २० ॥
उदश्रयन्ध्वजमिव विक्रमश्रियो
विजृम्भयन् फणमिव रोषभोगिनः ॥
प्ररोहयन् विजयतरोरिवाङ्कुरं
व्यभाव्यत भ्रुकुटिमता मुखेन सः ॥ २१ ॥
भुजेन तद्भुजगनिभेन भूभृत-
स्तनुत्रिणा विहितविधूननं धनुः ॥
अबूबुधच्छरधिगुहान्तशायिनः
स्वानिस्वनैरिव समराय सायकान् ॥ २२ ॥
विधीयतां किमधिमृधं विरोधिनां
परासुता किमु परिभाव एव वा ॥
इतीव तं विभुमनु योक्तुमुद्यता
शरावली श्रवणसमीपमाश्रयत् ॥ २३ ॥
अथ स्फुरद्गुरुगुणनादमेदुरा-
च्छरासनादुपहितमण्डलाकृतेः ॥
विनिर्ययुर्निशितमुखाः शिलीमुखाः
क्षयार्णवादिव वडवाग्निहेतयः ॥ २४ ॥

॥ १९ ॥ २० ॥ उदं चेति ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

शरोरगाः सुररिपुसैन्यसागरं
जगाहिरे नृपसुतचापनोदिताः ॥
विघट्टनस्फुटिततनुत्रनिष्पत-
त्स्फुलिङ्गकप्रसरविषानलाकुलाः ॥ २५ ॥
परोज्झिताः प्रहरणपङ्क्तयोपत-
न्नृपात्मजे हिमततिवह्निनाश्यताम् ॥
अनेकधाविससृपुरस्य ते तमो
रवेरिव प्रतिदिशमंशवः शराः ॥ २६ ॥
मुक्तापरैरायुधपङ्क्तयो या
नृपात्मजेताः प्रतिहत्य शीघ्रम् ॥
तद्बाणसंघाः शुशुभुः समन्ता-
द्भानोर्हिमानीरिव रश्मिपूगाः ॥ २७ ॥
रणोद्यतं प्रथममुदायुधावलि-
व्यलोकितात्रिदशजनैर्द्विषां बलम् ॥
अनन्तरं कलितकबन्धबन्धुरं
ततः क्षणात्क्षितितलसंस्तरायितम् ॥ २८ ॥
कबन्धभावात्पिशिताशनानां
प्रनृत्यतां कुक्षिमनुप्रविष्टाः ॥
विनिर्ययुः कण्ठपथेन तेषां
मूर्त्ता इव प्राणगणाः खगेन्द्राः ॥ २९ ॥
उत्कृत्ता अपि विशिखैः सजीवशेषा
मूर्द्धानः शितदशनोत्कटाः परेषाम् ॥
संस्कारादभिनववीरमापतन्तः
खे गृध्रैः कलितकचैरपाङ्क्रियन्तः ॥ ३० ॥

॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

शिरांसि तद्विशिखमुखार्पितान्यलं
विषादिनां नभसि निगृह्य चञ्चुभिः ॥
पतत्रिणः क्षणकृतमण्डलभ्रमाः
पदं दधुः परबलकेतुमूर्धसु ॥ ३१ ॥
रणक्षितौ परकरिणां शरक्षतै-
श्चिरं करैरभिलुलुठे भयङ्करैः ॥
हतोत्पतत्खगपतितुण्डखण्डित-
भ्रमन्महाविषधरभोगिभङ्गिभिः ॥ ३२ ॥
शरावलीविदलितकुम्भिकुम्भजा
विरेजिरे रणभुवि मौक्तिकोत्कराः ॥
प्रवर्तिताः प्रतिमुखमस्य संमदा-
जयश्रिया स्वयमिव लाजवृष्टयः ॥ ३३ ॥
हृतं शरैर्विजयिभिरुष्णवारणं
दिवं भ्रमत्पवनवशादशोभत ॥
मनस्विनां मनइव विक्रमोर्जितं
सविभ्रमं भुवनपरिभ्रमोद्यतम् ॥ ३४ ॥
तमीक्षितुं प्रतिमुखमाहितोद्यमा-
विरोधिनः क्षतशिरसः क्षणाच्छरैः ॥
नभोगताः सपदि सुराङ्गना सखा
व्यलोकयन्मुखमनिमेषदृष्टयः ॥ ३५ ॥
दृष्टा विशन्तश्च विनिर्गताश्च
विपाटयन्तो बलमप्रकाशाः ॥
सतोयदे व्योमनिदृष्टनष्टा-
श्चेरुर्महोल्का इव तस्य बाणाः ॥ ३६ ॥
॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

एकेषुणा ये रिपवोऽस्य भिन्ना
न ते द्वितीयस्य शरव्यमासन् ॥
भिन्दन्ति भानोः प्रथमे तमांसि
शेषाः करा लोकविभूषणाय ॥ ३७ ॥
च्युतानकप्रकटितमानडम्बरा
समन्ततोद्भृतबहुरत्नभूषणा ॥
असुक्षयक्षणिककृतान्तकल्पिता-
रणावनिर्विपणिरिव व्यभाव्यत ॥ ३८ ॥
दानाम्भोभिः कुम्भिनां पङ्किलान्ता
धावद्रथ्या नेमिसीमन्तदुर्गा ॥
पादातानां सा जघानाभिभूमि-
र्जम्बालत्वं रत्नजं बालसादा ॥ ३९ ॥
समधिकतरमाजौ राजसूनुर्विरेजे
त्रुटितसुभटकण्ठग्रन्थियन्त्रप्रणुन्नैः ॥
रुधिरघुसृणधाराचक्रवालैर्वितन्व-
न्नभिनवजलकेलीविभ्रमं दिग्वधूनाम् ॥ ४० ॥
सुरद्विषां तुङ्गतरैः कबन्धैः
पतद्भिरुर्वीसुचिरं चकम्पे ॥
प्राक्खण्डिताग्रैरनुकृत्तमूलै-
र्महाद्रुमाणामिव मध्यकाण्डैः ॥ ४१ ॥

एकेषुणेति ॥ ३७ ॥

च्युतेति ॥ अनकः शिरस्त्राणान्तेन प्रकटितो मानमात्रप्रपञ्चो यत्र ॥ क्षणिकः समर्थः 'विपणिः पण्यवीथिके' त्यमरः ॥ ३८ ॥

दानेति । जम्बालेन पङ्केन। सादयतीति सादा ॥ ३९ ॥

सामेति ॥ ४० ॥ ४१ ॥

बाणव्रातव्रणितवपुषां पेतुषां कुञ्जराणा-
मङ्गादङ्गात्कुलिशदलितोत्तुङ्गभूभृन्निभानाम् ॥
सद्यः प्राहुः प्रतिदिशमसृक्सिन्धवो मेरुमूल-
भ्रश्यज्जम्बूफलसुरसरित्पूरसौभाग्यभाजः ॥४२॥

नीहारसंक्षिप्तमिवाब्जखण्डं
कल्पाग्निना लीढमिवार्णवाम्भः ॥
शरन्मरुन्नुन्नमिवाभ्रवृन्दं
बलं कथाशेषमभूत्परेषाम् ॥ ४३ ॥

इति ससुभटदर्शं विद्विषां संप्रमाथा-
द्विरचितगुरुगुप्तिर्भूर्भुवस्वस्त्रयस्य ॥
विबुधमुनिनुतश्रीर्वर्धयन्धर्मधाराः
कृतसुरपतितोषः सोदराभ्यर्णमागात् ॥ ४४ ॥

सोथ तीव्रविरहव्यथाहरैः
सन्मनःसुखकरैः सुविस्तरैः ॥
आत्मवृत्तकथनैः सम्मादधे
दारसोदरमनःप्रहर्षणम् ॥ ४५ ॥

॥ ४२ ॥ ४३ ॥

इतीति ॥ सुभटान्दृष्ट्वा इति सुभटदर्शं ॥ 'कर्मणि दृशिविदोः साकल्ये' इतिणमुल् ॥ स रामोर्जुनश्च ॥ भूरादित्रयस्य ॥ विद्विषां रक्षसां वधात्प्रकटितागुर्वी पुरोरिन्द्रस्य च गुप्तिर्येन सोदरो लक्ष्मणो युधिष्ठिरादयश्च ॥ ४४ ॥

सोथेति ॥ स रामः दाराः सीता सोदरो लक्ष्मणः ॥ पक्षे आत्मेति प्रवासादारभ्य पुनर्दर्शनावधिंवृत्तान्तकथनैः दारेति द्रौपदी युधिष्ठिरादीनाम् ॥ ४५ ॥

सोत्कण्ठया तीव्रवियोगखेदाद्भुजोपपीडं प्रिययोपगूढः ॥
नरेन्द्रसूनुः सुतरां बभासे रत्येवयुक्तो भुवि कामदेवः ॥४६॥

इति कविराजकविराजकृतौ श्रीराघवपाण्डवीये काव्ये चतुर्थः सर्गः समाप्तः ॥ ४ ॥

—०:०—

## पञ्चमः सर्गः ।

तीर्थानामथगमनादघं नुदन्तः
शृण्वन्तो मुनिगदिताः कथाश्च दिव्याः ॥
पश्यन्तो नगवननिम्नगाश्च कालं
द्राघिष्ठं दिनमिव ते सुखेन निन्युः ॥ १ ॥

स्वाध्यायैरतिथिजनार्चनैः सहोमै-
र्भूतानां बलिहरणैः स्वधाभरैश्च ॥
संवासेष्वथ महतां च तत्कथाभि-
स्ते नैकं दिनमपि वन्ध्यतामनैषुः ॥ २ ॥

सोत्कण्ठेति ॥ प्रियया सीतया द्रौपद्या च भुजाभ्यामुपपीड्य इति भुजोपपीडम् ॥ 'सप्तम्यां चोपपीडरुधकर्ष' इति तृतीयान्तोपपदादुपपीडेर्णमुल् ॥ स रामोऽर्जुनश्च रत्या स्वभार्यया प्रीत्या च । कामः स्मरः काव्यप्रवर्तकश्च ॥ ४६ ॥

आवश्यकपदश्लेषव्याचिख्यासावशात्मनः ॥
लक्ष्मणस्य कृतौ सर्गस्तुरीयः समपद्यत ॥ १ ॥ ४ ॥

इति श्रीराघवपाण्डवीयटीकायां चतुर्थः सर्गः समाप्तः ॥४॥

तीर्थेति । द्राघिष्ठोतिदीर्घः ॥ १ ॥

स्वाध्यायैरिति । स्वधाभराः श्राद्धानि ॥ २ ॥

महाजगरसन्नद्धभीमसेनाभयङ्करात् ॥
राज्ञः प्रभावाद्दधिरे रोमहर्षं महर्षयः ॥ ३ ॥
स रक्षसां क्रोधवशेन सद्यो गणेन युद्धे यमसात्कृतेन ॥
श्रुतं प्रयातेन पुलस्त्यनप्तुर्दुर्मानसं क्षोभयति स्म भीमः॥४॥
वनेपि सा सङ्गतसत्यभामा सम्भाव्यमाना मुनिदारवर्गैः ॥
पुष्पैरपूर्वैर्दयितोपनीतैः कृतावतंसा विरराज राज्ञी ॥ ५ ॥
निशाचरेषु क्षयितेषु तत्र प्रवृत्तयज्ञोत्सवपुण्यघोषे ॥
मुदा मुनीन्द्रैः सुखमध्युवास प्रहृष्टदारावरजः स राजा॥६॥

महेति । महान्तोऽजगराः कवचानि यस्याः सा सा चासौ सन्नद्धा भीमानां भयङ्कराणां रक्षसां सेना तस्याः भयंकरात् भयानकाद्राज्ञो रामस्य प्रभावाद्रोमहर्षं रोमाञ्चं दधिरे । 'उरच्छदः कङ्कटकोजगरः कवचोस्त्रियामि'त्यमरः । पक्षे । अगस्त्यशापादजगरीभूतेन नहुषेण वेष्टितस्य भीमस्य भयङ्करात् राज्ञो युधिष्ठिरस्य प्रभावात् ॥ ३ ॥

स इति । भीमः शत्रुभयङ्करः स रामः क्रोधवशेन क्रोधाधीनेन श्रुतं प्रयातेन रावणश्रवणगोचरेण रक्षसां गणेन पुलस्त्यनप्तुः रावणस्य दुर्मानसं दुष्टं मनः क्षोभयामास । पक्षे क्रोधवशो नाम रक्षोगणः सौगन्धिकहरणे असत्कृतो हतः तेन पुलस्त्यनप्तुर्धनदस्य । मानसं सर इति कश्चित् । भीमो भीमसेनः॥४॥

वने इति । वनेपि सा राज्ञी सीता सङ्गताः प्राप्ताः सत्यदीप्तिलक्ष्म्यो यथा सा । सङ्गते सख्ये सती प्रशस्ता अभामा क्रोधशून्येति वा । रामोपनीतैरपूर्वैरद्भुतैः पुष्पैः कृतावतंसा । पक्षे द्रौपदीमीलिता कृष्णासहागततत्पत्नी यस्याः सा । भीमाहृतसौगन्धिककृतकर्णपूरा ॥ ५ ॥ ६ ॥

ततो रथव्यावृतघोषयात्रः सुरेन्द्रसेनाकृतरोषबन्धः ॥
अजातशत्रूद्यमरक्षितात्मा मायी रिपुस्तद्वनगोचरोभूत् ॥७॥
अथ स्फुरच्चित्रमृगोपलब्ध्यै दूरं गते सावरजे नरेन्द्रे ॥
तदाश्रमोपान्तमवाप लोभाज्जयद्रथस्तीव्रजवो दशास्यः ८

स तत्र कृष्णाञ्जितमीनलोचनां
निरीक्ष्यमूर्त्तिं जनकान्वयश्रियः ॥
वशं प्रपेदे वशिभिर्विगर्हितं
स्मरस्य मृत्योरथ वा दुरत्ययम् ॥ ९ ॥

तत इति । ततो व्यावृत आच्छादितः घोषो यस्यां सा यात्रा यस्य सः इन्द्रसेनायां कृतो रोषबन्धो येन अजातशत्रो-रनुत्पन्नप्रायवैरिणो रामस्योद्यमात् न जातः शत्रुर्यस्य तस्योद्य-मादिति वा मायावी रावणः। पक्षे । रथैर्व्यावृता बहुरथा घोष-यात्रा गोव्रजदर्शनार्था यात्रा यस्य सुरेन्द्रसेना इन्द्रप्रहितचि-त्ररथगन्धर्वसेना तया कृतो रोषेण बन्धो निग्रहो यस्य अजा-तशत्रोर्युधिष्ठिरस्योद्यमेन रक्षितात्मा युधिष्ठिराद्योजितभीमादि-भिर्मोचितः रिपुः सुयोधनः ॥ ७ ॥

अथेति । अथ चित्रमृगीभूतमारीचलाभाय स लक्ष्मणे रामे दूरं गते सति जयन् रथो यस्य स जयद्रथस्तीव्रजवः दशास्यो रावणः लोभात् सीताश्रमसमीपमुपागात् । 'रंहस्तरसीतुरयस्य-दः' इत्यमरः । जवः। पक्षे । भीमादियुते युधिष्ठिरे मृगयार्थं गते सति तीव्राज्जवादुत्कृष्टमशासनीयो जयद्रथः सैन्धवः ॥ ८ ॥

स इति । स रावणः तत्राश्रमे कृष्णाञ्जिते कज्जलाञ्जिते मीनवच्चञ्चले लोचने यस्याः तां जनकनाम्नोराजर्षेर्वंशस्य ल-क्ष्म्याः मूर्तिं सीतां । पक्षे । कृष्णां द्रौपदीं तिरस्कृतमनिनेत्रां जनकस्य पितुः ॥ ९ ॥

आलोकसम्भाव्यमसौ विलोक्य तदङ्गसौन्दर्यमनङ्गनुनः ॥
एवं वितर्कं मनसा चकार सहेन्द्रियैस्तन्मयतां गतेन १०
धाता ध्याननिमीलिताक्षिनिकरः कैश्चित्पदार्थैर्नवैः
सृष्ट्वेमां तदवस्थ एव नियतं यद्वक्षमायामधात् ॥
यद्युन्मीलितदृष्टिदृष्टममुना क्व स्यात्तदीयं वपुः
क्व ध्यानं क्व तपः क्व चास्य नियमः क्व ब्रह्मवादे रतिः ११
अभियोक्तुमात्मविशिखेन शिवं
यदि रूपमेतदवलम्ब्य पुरा ॥
अयतिष्यत ध्रुवमयुग्मशरो
ननु नाभविष्यदशरीर इति ॥ १२ ॥
स कामः कामोऽस्यामपि निजवधूकोपचकितः
प्रवृत्तानां स्वैरं सरसजनचित्तप्रमथने ॥
स्वयं लक्षीभावं किल निजशराणां परिहर-
न्ननङ्गत्वं गत्वा मम हृदयदुर्गं निविशते ॥१३॥
भवतु शतमखस्य स्वर्गलोकाधिपत्यं
भवतु तदनु भोग्या नन्दनोद्यानलक्ष्मीः ॥
भवतु सततफुल्लं दृक्सहस्रं तदीयं
सकलमफलमस्याः प्रेक्ष्यतां यो न यातः ॥१४॥
अविरतमखदीक्षाजातसंस्कारजाड्यं
स्फुटतरमपसंज्ञं मन्महे नाकनाथम् ॥

॥ १० ॥ धातेति । धाता ब्रह्मा । उन्मीलितेति क्रियाविशेषणम् ॥ ११ ॥

अभीति ॥ ननु वितर्के ॥ १२ ॥ १३ ॥

भवत्विति ॥ प्रेक्ष्यतां दृश्यत्वं पोष्यताभिति पाठे परिचारकताम् ॥ १४ ॥

भवति यदिसदृग्रूपवेषान्तरङ्ग-
श्चिरतरमकलत्रः स्यात्कथं गौतमोसौ ॥ १५ ॥

अस्याः स्फुटं माल्यकदामशोभि
वेणीगुणोत्कर्षमलिम्लुचानाम् ॥
कलापिनां कल्पयतीव दण्डं
शिखण्डभारक्षपणाद्घनान्तः ॥ १६ ॥

ईदृग्रूपप्रचयरचनारम्भपाण्डित्ययोगा-
ज्जातः शङ्के वचसि निपुणैः श्लाघनीयो विरिञ्चिः ॥
किंचैतस्याः प्रसवविधिना योगकोटीनिविष्टं
युक्तं भूमेर्बहुमनुमहे रत्नगर्भाभिधानम् ॥ १७ ॥

अनुदिनमपि गर्भं गाहतामम्बुराशे-
र्मुहुरपि रविबिम्बे स्वं वपुः प्रक्षिणोतु ॥
अपि पुनरकलङ्कं मण्डलं प्राप्य चन्द्र-
स्तुलयितुमलमस्या नैव वक्त्रारविन्दम् ॥१८॥

वनान्तरे स्तोकविभूषणापि
पर्याप्तशोभा निजयैव कान्त्या ॥
दृष्टा मया भाग्यवशेन सैषा
मेघोपरुद्धेव शशाङ्कलेखा ॥ १९ ॥

आलोकमात्रादखिलोप्यमुष्या
माभूज्जनो मन्मथबाणवध्यः ॥

अविरतेति । अन्यथा एनां परित्यज्य गौतमपत्न्यामिन्द्र-स्याभिलाषो न स्यादिति भावः ॥ १५ ॥

अस्या इति । मलिम्लुचाश्चोराः । घनान्तः शरत्कालः॥१६॥

ईदृगिति ॥ योगोवयवशक्तिः । 'जातौ जातौ यदुत्कृष्टं त-द्रत्नमभिधीयत' इति ॥ १७ ॥

अनुदिनमिति ॥ १८ ॥ १९ ॥

इतीव नूनं नगरीमपोह्य
वनान्तमेषा गमिता विधात्रा ॥ २० ॥
न खलु जलदगर्भाद्विद्यतेऽन्यत्रविद्यु-
त्स्फटिकजठरलभ्नो मृग्यते पद्मरागः ॥
इयमपि वनभूमौ वर्तते हन्त बाला
नहि जगति निधानं सर्वलोकप्रकाशे ॥२१॥
यावन्नरेन्द्रसुतसायकदक्षिणारु
सारङ्गरक्तकपिशं न वनं तदासीत् ॥
तामीक्षमीक्षमिति तर्कपरः स राजा
तावद्बभूव मदनायुधदक्षिणेर्मा ॥ २२ ॥
गाम्भीर्यादिव रथतोवतीर्य रागी
सोजानन्निव निजगाद तां तपस्वी ॥
कासि त्वं कलभकरोरु कस्य दाराः
को वा ते कथय वनान्तवासहेतुः ॥ २३ ॥

॥ २० ॥ २१ ॥

यावदिति ॥ यावन्नरेन्द्रसुतो रामो युधिष्ठिरादिश्च दक्षिणेऽरुरीर्मि च व्रणो यस्य ' दक्षिणारुर्लुब्धयोग।द्दक्षिणेर्माकुरङ्गक ' इत्यमरः ॥ दक्षिणेर्मा लुब्धयोगे इत्यत्र लुब्धग्रहणं प्रायिकम्॥ ' वाली हेमाब्जमाली गुणनिधिरिषुणा निर्मितो दक्षिणेर्मा'इत्यादि दर्शनादित्याहुः ॥ ईक्षमीक्षं दृष्ट्वादृष्ट्वा आभीक्ष्ण्ये मुल् । राजा रावणः सैन्धवश्च ॥ २२ ॥

गाम्भीर्यादिति ॥ गाम्भीर्यादिव रथादवतीर्य तपस्वी तापसवेषो दीनश्च ' तपस्वी तापसे दीने ' इति विश्वः । स रावणः सैन्धवश्च तां सीतां कृष्णां च ॥ २३ ॥

सा तेन पृष्टा चलचेतसापि
विस्पष्टमाचष्ट यथार्थमेव ॥
तस्यापि हृत्स्थं दशनांशुजालैः
शान्तिं नयन्तीव तमः समूहम् ॥ २४ ॥

योसौ वितानाहितसोमकार्यः
क्षोणीभृताहं जनकेन तेन ॥
लब्धापि कृष्णाजिनशोभितायां
क्षितौ कलत्रे तनयेव सीता ॥ २५ ॥

पतिर्मम क्षत्रमशेषभूभृत्प्रभाविरामोयमजातशत्रुः ॥
भीमश्च भीमावरजश्च जिष्णुर्नासत्यजाताभिरता च साहं२६

पितुर्निकेतं श्वशुराश्रयं च
विहाय साहं समयप्रतीक्षा ॥
दायादसंक्रामितराज्यभार-
स्वभर्तृभक्त्या विपिने वसामि ॥ २७ ॥

२४ ॥ य इति । वितानं यज्ञविस्तारे आहितं सोमकार्यं येन जनकनाम्ना कृष्णाजिनशोभितायां भूमौ कलत्र इव सीतानामकन्या अहं लब्धा ॥ पक्षे वितानं वंशविस्तारे आहितः सोमकनामा आर्यो यस्य तेन पित्रा कृष्णा नाम्ना अहं अजिनशोभितायां क्षितिरूपे कलत्रे मैथिलेन सीतेव लब्धा ॥ २५ ॥

पतिरिति । पतिः अशेषान्भूभृतोभिभवति तच्छीलं क्षत्रं क्षत्रियः रामो नामायं सन्निहितः मम पतिः शत्रुशून्यः भीमो भयङ्करः तादृशः कनिष्ठश्च जयशीलः साहमसत्यवादिनी न ॥ पक्षे प्रभाः विरमन्त्यस्मिन्प्रभाविरामो युधिष्ठिरः भीमस्तदनुजो जिष्णुरर्जुनश्च मम पतिः नासत्याभ्यामश्विभ्यां जातौ नकुलसहदेवाविति पञ्चापि मे पतय इत्यर्थः ॥ २६ ॥

पितुरिति ॥ समयं चतुर्दशवर्षरूपं त्रयोदशवर्षरूपं च प्र-

इयं हि पूर्वैः पदवी प्रदिष्टा
स्त्रीणां त्रिवर्गाधिगमस्य सूत्रम् ॥
दुःखेष्वदुःखेष्वथ वा स्थितोय
मेकेन भावेन पतिर्निषेव्यः ॥ २८ ॥
इति ब्रुवाणां स्मरबाणभिन्नः
स निःसपत्नो मनुजेन्द्रपत्नीम् ॥
मनोज्ञहासां कृतहासमेनां
पुनर्बभाषे प्रतिषिद्धभाषी ॥ २९ ॥
अयं पुराविद्भिरुदीर्यमाणः
स्फुटोभवत्सम्प्रति लोकवादः ॥
तृणे महानीलशिलेव सक्ति
करोत्यपात्रे खलु कामिनीति ॥ ३० ॥
इदं तु ते भर्तृजनस्य भाग्यं
तवाथवा प्राक्तनकर्मपक्तिः ॥
त्वया विचारोज्झितया स एव
न मुच्यते यद्गत दुर्गतोपि ॥ ३१ ॥

तीक्ष्माणा दायादे भरते दायादेन दुर्योधनेन च संक्रामितो निवेशितोपहृतश्च राज्यभारो यस्य भर्त्तुः रामस्य युधिष्ठिरस्य श्च ॥ २७ ॥

इयमिति ॥ इयं मूलपदवी पातिर्वा ॥ २८ ॥

इतीति । प्रतिषिद्धभाषीति परस्त्रीसंलापस्य निषिद्धत्वात्॥२९॥

अयमिति ॥ 'योग्यभाजनयोःपात्रमि'त्यमरः ॥ ३० ॥

इदमिति ॥ पक्तिः परिपाकः॥ उज्झितविचारया पाठान्तर विचारशून्यया ॥ दुर्गतो दरिद्रः ॥ 'दरिद्रादुर्गता' वित्यस्मात्पचाद्यच् । 'दरिद्रो दुर्गतोप्यसा' वित्यमरः ॥ ३१ ॥

अनात्मसन्तारसमर्थमेनं
सात्वं विहायात्महिते यतस्व ॥
अथास्ति कृत्यं तृणकाष्ठलोष्ठै-
र्न राज्यहीनैर्नरदेववश्यैः ॥ ३२ ॥
भिक्षावृत्तिं हरमपि जहौ जाह्नवी सिन्धुनम्रा
हित्वा नागानुपरतमदान्पंकजे याति भृङ्गी ॥
वीर्योदग्रं भजति नृपतिप्राक्तनं मोह्य पृथ्वी
सारोपेता सरसिजदृशा तुल्यतुल्या भवन्ति ॥३३॥
अहं युवा सुन्दरि सिन्धुराजः
कुबेरसंपत्प्रतियोगलक्ष्मीः ॥
यो रावणो विद्विषतामसाध्य-
स्तमागतं मां भज भर्तृभावात् ॥ ३४ ॥
सा त्यक्तशोका जटिलात्मकेशै-
रुद्यानलक्ष्मीमुपशोभयन्ती ॥
मत्पाणिलूनप्रसवावतंसा
साकं मया संचर सिन्धुदेशान् ॥ ३५ ॥
सा तेन वाक्यैरितिसांत्विताऽपि
धाराहता विद्युदिव स्फुरन्ती ॥

अनात्मनेति ॥ नरदेववश्यैः राजाधीनैरिति अर्थः ॥ वशं गत इति यत्प्रत्ययः ॥ नरदेवसंज्ञैरिति वा पाठः ॥ राज्यहीनैः राजभिः किमपि कृत्यं नास्तीत्यर्थः ॥ ३२ ॥

भिक्षेति । सारो धनम् ॥ ३३ ॥

अहमिति ॥ अहं सिन्धोः समुद्रस्य राजा सिन्धुरेण गजेनाजतिगच्छतीति वा रावणो नाम । पक्षे सिंधुदेशपतिः जयद्रथः वैरिणामाक्रन्दकरः ॥ ३४ ॥

सेति ॥ सिन्धुः समुद्रो देशभेदश्च ॥ ३५ ॥

अलं प्रलापैरपयाहि पापे-
त्युक्त्वा परावृत्तमुखी बभूव ॥ ३६ ॥
यदा तया प्रार्थितयापि भूयः
श्रीरेवया शोण इवापविद्धः ॥
विकारमासाद्य तदा स तीव्रं
बलेन तां हर्तुमियेष बालाम् ॥ ३७ ॥
पुरातिदर्पादिव दानवस्त्रयीं
विधुन्तुदः पार्वणचन्द्रिकामिव ॥
नदीरयस्तीरलतामिवोत्प्लुवैः
सन्ती जहार प्रसरैः स भामिनीम् ॥ ३८ ॥
तथागतां तामवलोक्य विह्वलां
तदार्तनादप्रतिशब्दमेदुरे ॥
गुहानने निर्झरबाष्पवर्षिणि
स्वयं नु चक्रन्द वनान्तमेदिनी ॥ ३९ ॥
चलज्जटायौवनसीम्नि तिष्ठता
विलोक्य चौर्य्येण हृतां बलेन ताम् ॥
तदीयकेलीहरिणीगणैः समं
चिराय चुक्रोश वने द्विजावलिः ॥ ४० ॥

सेति ॥ ३६ ॥

यदेति ॥ यदाविकारं तापसवेषत्यागं मन्मथं च ॥ ३७ ॥

पुरेति ॥ दानवो हयग्रीवः ॥ ३८ ॥ ३९ ॥

चलेति । चलन् जटायुर्गृध्रराजो यस्याः सा 'सीमसीमेस्त्रियामुभे' इत्यमरः । परो रावणः द्विजाः पाक्षिणः । पक्षे चलन्त्यो जटाः यस्याः सा ब्राह्मणपाङ्क्तिः 'जटालग्ने कचे मूले नास्याज्झक्षेऽपुनर्जटीति' विश्वः । 'दन्तविप्राण्डजाद्विजाः' इत्यमरः । यौवनेति । यूना परेण जयद्रथेन तां द्रौपदीम् ॥ ४० ॥

आकृष्यमाणः प्रसभादिवोच्चै-
स्तदार्तनादैर्निजया रुषा च ॥
त्वरावतस्तस्य रुरोध मार्गं
जवेन भीमः खगराट् समानः ॥ ४१ ॥
परस्पराक्षेपविवृद्धरंहसोः
प्रहाररेखाङ्कितगात्रयोर्मिथः ॥
प्रकर्षविस्मापितसिद्धचारणं
तयोरभूत्संगरकर्म दारुणम् ॥ ४२ ॥
चिरप्रहारक्षतपक्षमेनं
निगृह्य कण्ठस्थितजीवशेषम् ॥
स भीमसेनः स्वबलेन निन्ये
तां धर्मराजाश्रितदिङ्मुखान्तम् ॥ ४३ ॥
विनिद्रनीलोत्पललोचनानां
प्रबुद्धबन्धूकललामभाञ्जि ॥
मुखानि रम्याणि दिगङ्गनानां
भान्ति स्म हासैरिव हंसयूथैः ॥ ४४ ॥

आकृष्येति । भयंकरोभिमानी च खगराट् जटायुः तस्य रावणस्य । पक्षे भीमो जयद्रथस्य मार्गं खगराट्समः ॥ ४१ ॥

परस्परेति ॥ ४२ ॥

चिरमिति । पक्षः पतत्रं एनं जटायुं निगृह्याभिभूय कण्ठेति क्रियाविशेषणं वा । भीमा सेना अस्य रावणः सीतां दक्षिणां दिशं निन्ये । 'पक्षो मासार्द्धके पार्श्वे गृहे साध्यविरोधयोः । केशादेः परतो वृन्दे खले सखि सहाययोः । चुल्लीरंध्रे पतत्रे च वाजिकुञ्जरपार्श्वयोरिति' मेदिनी ॥ ४३ ॥

विनिद्रेति ॥ ४४ ॥

निशाचराणामुपरोधकर्त्री
पत्या प्रकामं कृतसान्त्वनापि ॥
निनाय सा शोकवनेषु कालं
न मृत्युना नाप्यथ जीवितेन ॥ ४५ ॥

ततो वनेषु भ्रमते शशंस
भर्त्रे प्रजानामरणिं प्रियां स्वाम् ॥
द्विजोत्तमः कृच्छ्रगतः श्रमेण
परेण बिभ्यद्धरिणापनीताम् ॥ ४६ ॥

वने पुनस्तत्पदवीं विचिन्व-
न्निजानुजप्राणभयोद्यतेन ॥
कबन्धभूतेन परिश्रमार्तः
केनापि भूतेन स सङ्गतोभूत् ॥ ४७ ॥

निशेति । स्वस्योपरोधकर्त्री रक्षसां पत्या रावणेनात्यन्तसांत्वितापि सा सीता अशोकयुक्तेषु वनेषु जीवन्मृतावस्थया कालं निनाय । पक्षे रक्षसां निग्राहकेण पत्या भीमेन सा द्रौपदी शोकयुक्तेषु वनेषु ॥ ४५ ॥

तत इति । ततो भर्त्रे सीतापतये तदन्वेषणाय भ्रमते युद्धश्रमेणान्त्यावस्थामापन्नः पक्षिराजो जटायुः बिभ्यद्धरिरिंद्रो यस्मात्तेन परेण शत्रुणा रावणेन नीतां प्रजानां सन्ततीनामरणिमिव उत्पादिकां स्वां प्रियां सीतां शशंस कथयामासेत्यर्थः । पक्षे प्रजानां भर्त्रे युधिष्ठिराय स्वां अरणिमग्निमथनकाष्ठं प्रियामिष्टां द्विजोत्तमः ब्राह्मणः श्रमेणोपलक्षितः । बिभेति धर्मलोपादिति बिभ्यत् हरिणेन मृगरूपिणा धर्मेणापनीतां 'निर्मथ्यदारुणित्वरणिर्द्वयोः' इत्यमरः ॥ ४६ ॥

वने इति । तस्याः सीतायाः अनुजस्य लक्ष्मणस्य कबन्ध-

स तेन पूर्वं कृतविग्रहोपि
तद्व्याहृतार्थप्रतिवाक्यदानैः ॥
भृशं धिनोतिस्म मनस्तदीयं
न याति को नाम वशं गुणानाम् ॥ ४८ ॥

ततो वधाविष्कृतदिव्यदेहा-
द्धितोपदेशं प्रतिपद्य धर्मतः ॥
निजानुजन्मप्रतिमोक्षणादसौ
विपत्पयोधिं मनुतेस्म गोष्पदम् ॥ ४९ ॥

ततः समुद्दीपितमत्स्यमण्डलं
समुन्नमत्कीचकवंशदुर्गमम् ॥
परैरचिन्त्याचरितः समुच्चल-
न्नराधिपं पावनमाससाद सः ॥ ५० ॥

भूतेन कवन्धत्वं प्राप्तेन भूप्राप्तौ । स रामः । 'कवन्धोस्त्री क्रियायुक्तमपमूर्द्धकलेवर'मित्यमरः । पक्षे तस्याः अरणेः भ्रातॄणां भीमादीनां कस्य जलस्य प्रतिबन्धकेन सः युधिष्ठिरः ॥ ४७ ॥

स इति । स कवन्धः पूर्वं रामेण कृतविरोधोपि तदुक्तस्य प्रत्युत्तरैः प्रीणयति स्म । धिविप्रीणने । पक्षे सयुधिष्ठिरः तेन धर्मेणोत्पादितशरीरः तत्कृतधर्मविषयकप्रश्नोत्तरदानैस्तमतोषयत् ॥ ४८ ॥

तत इति । वधे सति आविष्कृतदिव्यरूपात् धर्मतः सख्यधर्मात् हितोपदेशं सुग्रीवसख्यादिविषयं अनुजो लक्ष्मणः। पक्षे अवधे भीमादिजीवने आविष्कृतस्वरूपात् धर्मात् हितोपदेशं विराटगृहवासादिविषयं अनुजन्मानो भीमादयः ॥ ४९ ॥

तत इति । परैरतर्क्यचरितः स रामः स्फुरन्मत्स्य समूहं समु-

मातङ्गतेजःक्षपितारिशक्तौ
स वानरेन्द्रं विषये वसन्तम् ॥
समीरपुत्रेण कृतानुकूल्यः
सम्प्राप राजा विदितः सखायम् ॥ ५१ ॥
सोऽक्षरं धनसङ्गीतहरिगोत्रावलम्बनैः ॥
तत्कर्मभिः स्वं कृतिनं विभावस्वन्वयोऽस्मरत् ॥५२॥

न्नमद्भिः कीचकाख्यैर्वेणुभिर्दुर्गमं समुच्चलन्तोऽपगच्छन्तो नराणामाधयो मानसव्यथा येन तत् पम्पासरस्तीरवनं तज्जलं वा प्राप । पक्षे परैः शत्रुभिरज्ञातचरितः समुच्चलन्नागच्छन् सः युधिष्ठिरः समुद्दीपितं प्रकाशितं मत्स्यानां स्ववंश्यानां देशविशेषाणां वा मण्डलं येन कीचकास्तन्नामानः श्यालास्तद्वंशेन दुर्गमम् । पावनं नराधिपं विराटं ॥ ५० ॥

मातङ्गेति । मुनिविशेषस्य तेजसा प्रभावेण क्षपिता अरेर्वालिनः शक्तिर्यस्मिन् स विषयः देशः ऋष्यमूकस्थस्तत्र वसन्तं वानराणामिन्द्रं सुग्रीवं समीरपुत्रेण हनुमता कृतानुकूल्यः विदितः ख्यातः तेनैव सुग्रीवाय निवेदितः बुद्धिमान् वा स रामः मित्रं प्राप । पक्षे । मातंगाः गजाः नरेन्द्रं राजानं समीरपुत्रो भीमः अविदितः अज्ञातः सखायं वा मित्रमिव इवार्थे वाशब्दः ॥ ५१ ॥

स इति । न क्षरन् अक्षरन् सुस्थिरः विभावस्वन्वयः सूर्यपुत्रः सुग्रीवः तस्य रामस्य कर्मभिः धनसङ्गी प्राप्तप्रायराज्य इतानां प्राप्तानां वानरकुलानामवलम्बनैः स्वंकृतिनमस्मरत् । कृतज्ञो रामोपकारं न विसस्मार । अक्षरमिति क्रियायाः स्वस्य वा विशेषणं धनसङ्गिना प्राप्तराज्येन वालिना इतायाः प्राप्तायाः हरिगोत्रायाः वानरभूमेः किष्किन्धायाः अवलम्बनैः सं-

स व्यंजयन्नात्मभुजस्य तेजः
संधृष्टविद्विट्बललोपि मल्लान् ॥
रणेषु भीमो रघुवीरवर्य-
स्तालान्वने वायुरिवोन्ममाथ ॥ ५३ ॥

दारोपरोधेन कृतापराधं
रणोद्यतं भ्रातृजनेन साकम् ॥
मूर्छद्यशोदुन्दुभिशत्रुमेनं
स कीचकं दावइव व्यमथ्नात् ॥ ५४ ॥

भावितैः स्वंकृतिनममन्यतेति वा वानराद्युपष्टंभहेतुकैः रामकर्मभिः सीता न्वेषणादिभिः । स्वं कृतिनमस्मरदितिवा । पक्षे विभाः विशिष्टदीप्तिः वसोरुपरिचरस्य वंशो विराटः मत्स्यराजस्योपारिचररेतः समुद्भवत्वात् । अक्षादिभिः पाण्डवकर्ममिः अक्षदेवने युधिष्ठिरो रन्धने पाककर्मणि भीमः सङ्गीते नृत्यगीतादौ बृहन्नडारूपो र्जुनः अश्वशिक्षायां नकुलो गवां परामर्शे सहदेवश्च नियुक्तः । 'गव्यागोत्रागवांवृन्द' इत्यमरः । विभास्वन्वयः सूर्यवंश्यो विराट इति कश्चित् ॥ ५२ ॥

स इति । संग्रामेषु भीम रघुवीरवर्यो रामः संधृष्टानां सधर्षवतां विद्विषां बलं लुंपतीति तत्स्वभुजबलं प्रदर्शयन् मल्लान् वलीयसः । 'मल्लः पात्रे कपाले च मतभेदे वलीयसीति' विश्वमेदिन्यौ । तालान् वृक्षविशेषान् वायुरिवोन्ममाथ । पक्षे वीरवर्यो भीमः लघु शीघ्रं रणेषु मल्लयुद्धेषु मल्लान् युद्धोपजीविनः उन्ममाथ तालान् वायुरिव संधृष्टेत्यादि कर्मधारयो वा । 'गीतकालक्रियामाने तालः खड्गादिमुष्टिषु । द्रुमभेदे करास्फाले' इतिविश्वः ॥ ५३ ॥

दारेति । दाराः सुग्रीवभार्या रुमा तस्याः उपरोधः बल-

भावान्तरं प्राप्य सुरेन्द्रसूनौ
स्वस्थानमासेदुषि वीरवर्ये ॥
राजानमुज्जृम्भितमत्स्यकेतुं
सुग्रीवमृद्धाङ्गदमापलक्ष्मीः ॥ ५५ ॥

महीभृतो माल्यवतस्तदा तं बृहन्नलाढ्ये कटके वसन्तम् ॥
परप्रणीता स्वकलत्रपीडा कङ्कं न सालम्भयदार्तियोगम् ५६

त्स्वीकारः तेनापराधिनं सुग्रीवेण सह युध्यमानं मूर्च्छद्यशो- यथास्यात्तथा दुंदुभेर्दैत्यस्य शत्रुं वालिनं वेणुविशेषयुक्तं वन- मिव रामः सञ्जहार । 'दवदावौवनानले' इत्यमरः । पक्षे द्रौपद्युपरोधचिकीर्षया कृतापराधं एकोनशतसंख्यैः भ्रातृभिः सह युद्धायोद्यतं मूर्च्छद्यशोदुन्दुभिर्यथा स भीमः कीचकं वि- राटशालम् ॥ ५४ ॥

भावेति । सुरेन्द्रसूनौ वालिनि भावान्तरं प्रेतदशां प्राप्य स्वर्गते सति । 'भावः सत्ता स्वभावाभिप्रायचेष्टात्मजन्मसु' त्यमरः । प्रवृद्धकन्दर्पं समृद्धवालिसुतं राजानं सुग्रीवं लक्ष्मीः प्राप । पक्षे अर्जुने षांढ्यं प्राप्य सङ्गीतशालास्थे उज्जृंभितश्वा- सौ मत्स्यानां स्ववंशानां केतुरिव प्रकाशकस्तं विराटं धृतबाहु- भूषणं । 'अङ्गदः कपिभेदेस्यात्केयूरेभूषणेंगदमि'तिविश्वः॥५५॥

महीति । माल्यवतो गिरेर्नितंबे बृहद्भिर्नलैस्तृणविशेषैराढ्ये वसन्तं रामं रावणकृता स्वदारपीडा कं कमार्त्तियोगं नालंभयत् । अपितु सर्वं । पक्षे पुष्पादिभोगसंपन्नस्य विराटस्य बृहन्नडायुक्ते अर्जुनयुक्तायां राजधान्यां वसन्तं कङ्कनामानं ब्राह्मणलिंगिनं युधिष्ठिरं कीचककृता द्रौपदीपादप्रहारादिपीडा आर्त्तियोगं नालम्भयदिति काकुः । अलम्भयदेव । 'कटकंवलयेसानौराज- धानीनितम्बयोरिति' विश्वः । 'अजातशत्रुः कङ्कश्चेति' त्रि-

अथ घननिकुरम्बैरम्बुसम्भारलम्बैः
स्थगितगगनगर्भा विद्युदुद्योतहृद्या ॥
नृपकुलजययात्रा केलिदीर्घान्तरायः
पथिकमिथुनमृत्युः प्रावृडुज्जृम्भतेस्म ॥ ५७ ॥

शीकरक्षणशीतमारुत-
श्चातकप्रकरकौतुकावहाः ॥
बभ्रमुः कृतवियोगिविभ्रमा-
वारिवाहनिवहा विहायसि ॥ ५८ ॥

द्राक् तडित्कृतककोणताडितै-
र्दध्वने घनघटामहानकैः ॥
ताण्डवं तदनुरूपपेशलं
मण्डलेन विदधे शिखण्डिनाम् ॥ ५९ ॥

याचितेन बहुयाचकैर्द्विजैरम्बुदेन जलदानपूर्वकम् ॥
हेममुष्टिरिव दूरमीरिता सञ्चचार रुचिरा चिरप्रभा ॥६०॥

प्रावृषा जलदपंक्तिबाहुना
चण्डधाम्नि विहितोपगूहने ॥
केलिभिन्नमिव रत्नकङ्कणं
खण्डमिन्द्रधनुषःस्म शोभते ॥ ६१ ॥

काण्डशेषः । 'कङ्कोब्राह्मणलिङ्गिनीति' हैमः ॥ ५६ ॥

'समूहोनिकुरंबकमि' त्यमरः । 'स्त्रीपुंसौ मिथुनं द्वन्द्व-मिति च स्त्रियां प्रावृट् स्त्रियां भूम्नि' इति च ॥ ५७ ॥ ५८ ॥

द्रागिति ।'कोणोवीणादिवादनमि'ति । दध्वने शब्दायितं । घंटासमूहः आनकः पटहः ॥ ५९ ॥

याचीति । द्विजैः पक्षिभिर्ब्राह्मणैश्च ॥ ६० ॥

प्रावृषा युवत्येव सूर्यः कान्त इव ॥ ६१ ॥

केकिनां कलितकेकमुच्चकैर्बर्हभारमवतत्य नृत्यताम् ॥
चन्द्रकैर्विचकसेऽभ्रमण्डलं द्रष्टुमक्षिनिकरैरिवाच्छकैः ॥६२॥

व्योम्नि खेलदचिरांशुनर्तकी-
हारयष्टिनिभयाम्बुधारया ॥
पर्यसारि निपतद्घनोपलव्या-
जनायकमणिप्रकीर्णया ॥ ६३ ॥

लोकमुन्मदयितुं प्रसारिता
चूर्णमुष्टिरिव मीनकेतुना ॥
दिङ्मुखेषु नवनीपजं रजो
वार्षिकेण मरुता विचिक्षिपे ॥ ६४ ॥

स्पर्शसौख्यमनिलेन लम्भिताः
कामिनेव वनराजियोषितः ॥
उल्लसन्नवकदम्बकेसरा
रेजिरे स पुलकोद्गमा इव ॥ ६५ ॥

मारुतेन निजवाहनोचितं
नूनमिन्दुहरिणं ग्रहीतुमिच्छता ॥
आततैर्जलदवागुराशतै-
र्ऋक्षमण्डलमपि न्यरुध्यत ॥ ६६ ॥

शाद्वलेषु निचिताः परिस्फुर-
द्वारिबिन्दुषु सुरेन्द्रगोपकाः ॥
मौक्तिकव्यतिकरातिसुन्दरैः
पद्मरागमणिभिः सममभुः ॥ ६७ ॥

॥६२॥ व्योम्नि पर्यसारि गालितं ॥ ६३ ॥ ६४ ॥ ६५ ॥
महावागुरा मृगबन्धनी ऋक्षं नक्षत्रं भल्लूकश्च ॥ ६६ ॥
शाद्वलेति । इन्द्रगोपा लोहितकीटविशेषः ॥ ६७ ॥

उत्तरीयमिव केतकावलिः
केसरौघमनिले विधुन्वति ॥
भृङ्गलोलसुमनोदलच्छला-
त्प्राहिणोदिव कटाक्षमायतम् ॥ ६८ ॥

चंचुचुम्बितमनोज्ञमालती-
कुड्मलाः प्रतिपदं मधुव्रताः ॥
दध्रिरे रजतसूचिकोटिभिः
सीव्यमानहरिनीलविभ्रमम् ॥ ६९ ॥

अप्रकाशितनिशाकरानना
मेघनीलवसनावगुंठनाः ॥
रागिणां रजनयो वितेनिरे
चित्ततोषमभिसारिका इव ॥ ७० ॥

उच्छलत्कुटजगुच्छपाण्डुरा
भृङ्गसङ्गतशिलीन्ध्रबन्धुराः ॥
कन्दलीदलनसुन्दरा बभुः
प्रावृषेव ककुभः प्रसाधिताः ॥ ७१ ॥

ततस्तडिचञ्चलसम्पदस्ते
वियोगिरामाशयदत्तशोकाः ॥
दशाविशेषाइव शात्रवाणां
क्रमेण वर्षादिवसाः प्रसेदुः ॥ ७२ ॥

उत्तेति । केतकावलिर्नायिकेवानिलो नायक इव ॥ ६८ ॥
चंचुइति । हरिनीलः ॥ ६९ ॥ ७० ॥
उच्छेति । प्रावृषासख्येव दिशः सख्यइवालंकृताः ॥ ७१ ॥
तत इति ॥ रामो दाशरथिः रामाः सुभद्रादयःस्त्रियश्च शत्रुदशा अपितडिद्वच्चंचलसंपदः ॥ ७२ ॥

अथोडुमालोज्ज्वलतारहारा
ज्योत्स्नास्मितोल्लासि शशाकवक्त्रा ॥
गृहीतफुल्लाम्बुरुहा शरच्छ्रीः
प्रावृट्पयोधेरुदियाय रम्या ॥ ७३ ॥

पद्मेषु हंसान्नलिनेषु भृङ्गा-
न्मनस्सु रागं मृगलोचनानाम् ॥
प्रायुंक्त पाथःसु च सम्प्रसादं
स्थानेष्वनेकेषु गुणान् घनान्तः ॥ ७४ ॥

कुबेरगुप्तात्सरसंसरस्तः सरोजरेणूत्करगौरपक्षाः ॥
गताम्बुवाहं गगनान्तरालं जगाहिरे राजमरालमल्लाः ॥ ७५

निरस्य धाराधरशैवलौघं सलीलमालम्बितरश्मिसूत्रम् ॥
भूषामणिभ्रष्टमिवार्कबिम्बं प्रावृट्शिरस्तः शरदुज्जहार ७६

प्रबोधभाजः परमस्य पुंसो
विलोचने द्वे किल मुक्तनिद्रे ॥
व्यपेतपाथोधरपक्ष्मरोधं
व्यराजतां व्योमनि पुष्पवन्तौ ॥ ७७ ॥

मौनं मयूरीषु नदीषु कार्श्यं विपाण्डुरत्वं जलदावलीषु ॥
शरद्यभीष्टागमनिर्वृताभिर्न्यासीकृतानीव वियोगिनीभिः ७८

अथ ज्योत्स्नेव शशाङ्क इव पद्महस्ता श्रीरित्यागमः ॥ ॥ ७३ ॥ ७४ ॥

कुबेरेति । सरसं यथा स्यात्तथा सरस्तो मानसात् । मराला हंसाः ॥ ७५ ॥

निरस्येति । सरसि भ्रष्टो हि मणिः शैवालमपसार्योद्ध्रियते ॥ ७६ ॥

प्रबोधभाज इति । एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरावित्यमरः ॥ ७७ ॥

आसाद्य वर्षा रजनीविरामं प्रबोधहेतोर्मकरध्वजस्य ॥
पठद्भिरुच्चैरिव मङ्गलानि कुलैः शुकानामुदकूजि हृद्यम् ७९
विशीर्णसंक्रन्दनचापलेशछवीनि कीर्णानि तरुस्थलीषु ॥
सलीलमादाय मयूरबर्हाण्युत्तंसयन्ति स्म किरातनार्यः ८०

पयोदकालेन समुद्रगानां
कालुष्यमुत्पाद्य समुज्झितानाम् ॥
नवा नखाङ्का इव रेजुरक्ष्णां
शृंगाग्रलेखास्तटसीम्नि लग्ना ॥ ८१ ॥

समुद्रपातोत्थितवक्रजाड्य-
निवृत्तये कुंभभवेन नद्यः ॥
उद्गच्छता पीतजला इवाच्छाः
पत्न्यः पयोधेः कृशतामुदूहुः ॥ ८२ ॥

व्यपेतनृत्याः परिमन्दनादाः
निरस्तबर्हाः शिखिनो नरेजु ॥
लयं गते लास्यगुरौ पयोदो
तत्कालशिक्षामिव धारयन्तः ॥ ८३ ॥

विनिद्रनीलोत्पललोचनानि प्रबुद्धबन्धूकललामभांजि
मुखानि रम्याणि दिगङ्गनानां भांतिस्म हासैरिव हंसयूथैः ८४

मौनमिति । उत्प्रेक्षायां विपाण्डुरत्वं जलदावलीष्विति पाठः । तेन न प्रक्रमभङ्गः स्त्रियः स्त्रीष्वेववस्तुन्यस्यन्तीत्यौचित्यं च । आह च । ' अनौचित्यादृते नास्ति रसभङ्गस्य कारणं ' । प्रसिद्धौचित्यबन्धौ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ॥ ८२ ॥ ८३ ॥

विनिद्रेति । ललामं भूषणम् ॥ ८४ ॥

चक्राह्वकादम्बकदम्बकान्त-
कासारविस्फारसरोजशोभाम् ॥
केदाररम्यां धरणीं विलोक्य
केदारवृन्दं प्रमदं न चक्रुः ॥ ८५ ॥
निशानिशीथिनी कान्तकान्तिसन्तातिसङ्गताः ॥
विरेजुः कामदेवस्य यशोभिरिव शोभिताः ॥ ८६ ॥

इति कविराजकविराजकृतौ श्रीराघवपाण्डवीये काव्ये पञ्चमः सर्गः समाप्तः ॥ ५ ॥

——००——

## षष्ठःसर्गः।

समग्रवैकर्त्तनशक्तिरग्रे प्रोद्यन्सुशर्माथ सधार्त्तराष्ट्रः ॥
तथा शरत्कालइवैत्य राज्ञो विनिष्पतज्जीवधनं रुरोध ॥१॥

॥८५॥ निशाः कामदेवः स्मरः काव्यप्रयोजकश्च ॥ ८६ ॥

आवश्यकपदश्लोषठ्याचिख्या सा वशात्मनः लक्ष्मणस्य कृतौ पञ्चमसर्गः समपद्यत ॥ ५ ॥

इति राघवपाण्डवकाव्यटीकायां पञ्चमसर्गः समाप्तः ॥५॥

——

समग्रेति ॥ तथा शरत्कालइवैत्य रामस्य विनिष्पतज्जीवधनं रुरोध। समग्रा विकर्त्तनस्य सूर्यस्य वैकर्त्तनस्य सुग्रीवस्य वा शक्तिरस्मिन् प्रकर्षेणाग्रे उद्यत्सुशर्म सान्द्रं सुखं यस्मिन्धार्त्तराष्ट्रैः हंसैः सहितः। पक्षे स धृतराष्ट्रपुत्रो दुर्योधनः समग्रकर्णशक्तिः अग्रे प्रथमं दक्षिणगोग्रहणे प्रोद्यन् सुशर्मा त्रैगर्त्तो योधविशेषो यस्य उक्तविशेषणविशिष्टशरत्कालइवोपेत्य राज्ञो विराटस्य निष्पतत् बहिः सञ्चरत् जीवधनं जीवितामिव प्रियं धनम्। 'धनं गोधनवित्तयोः'। 'धार्त्तराष्ट्रासितास्यांघ्रि-

द्विषा तदा गोग्रहणे निबद्धे राज्ञा प्रतीकारपरेण नुन्नम् ॥
सद्यः प्रसर्पद्धरिसैन्यमुद्यद्गजप्रचारोद्धतमुच्चचाल ॥ २ ॥
गतेषु सैन्येषु सुशर्महेतोः स लब्धचिह्नः सुनयोत्तरश्रीः ॥
हरेस्तनूजप्रतिपन्नकालं नृपप्रियान्वेषगतत्परोभूत् ॥ ३ ॥
समृद्धतेजाः सगृहीतहेतिः शर्मी समासाद्ययथा कृशानुः ॥
नरेन्द्रसूनोरवधार्यशङ्कां कुर्वन् प्रतस्थे विजयप्रतीतिम्॥४॥
ईसकौरवभोगिष्विति ' विश्वः । जीवो गुरावपीति च ॥ १ ॥

द्विषेति । द्विषा रावणेन तस्य सीताहरणरूपस्यागसोपराधस्य ग्रहणे स्वीकारे निबद्धे निर्व्यूढे सति तत्प्रियचिकीर्पुणा राज्ञा सुग्रीवेण प्रेरितं तत्क्षणं प्रसतृहरीणां वानराणां सैन्यं मुद्यतो गजस्य वानरविशेषस्य प्रचारेणोज्वलं उच्चचाल चालितम् । पक्षे दुर्योधनेन गोग्रहणे कृते सति तस्मिन्काले विराटेन प्रेरितं प्रसर्पदश्वसैन्यं उद्गतसहस्तिसंचारोज्वलं सद्यस्तत्क्षणम् । प्रतीकारेति उपसर्गस्य घञ् मनुष्ये वहुलमिति दीर्घः ॥ २ ॥

गतेष्विति । सुशर्महेतोः शोभनसुखार्थं वानरसैन्येषु गतेषु स्वेन लब्धं हिन्हं रामांगुलीयं येन सुतरां नयोत्तरां उत्कृष्टनीतिका श्रीर्यस्य स हरेर्वायोः पुत्रो हनुमानङ्गीकृतावधि नृपप्रियायाः सीतायाः अन्वेषणतत्परोभूत् ॥ पक्षे सुशर्मणस्त्रैगर्तयोधस्यार्थेविराटसैन्येषु प्रस्थितेषु प्रतिपन्नः प्राप्तः कालस्त्रयोदशवर्षांतो येन आत्मकृतं लब्धं चिन्हं शस्त्रस्थापनस्थले प्रत्यभिज्ञानं कपिध्वजादि वा येन शोभननीतियुक्ता उत्तरस्यविराटपुत्रस्य श्रीर्यस्मात्सोर्जुनः विराटप्रियस्य तद्गोधनस्यान्वेषगं अन्विष्य परावर्त्तत ॥ ३ ॥

समृद्धेति ॥ दीप्त्या पाठान्तरे समृद्धं वा तेजो यस्य स मारुती रामस्य सन्देहं दूरीकृत्य जयनिश्चयं कुर्वन्प्रास्थितः । नि॰

गच्छन्विलङ्घ्य नगरोपवनान्तराणि
सम्पातिपत्ररथसूचितकार्यसिद्धिः ॥
धीरो ददर्श करिनक्रकरालमग्रे
घोषोद्धतं सलिलराशिमिवारिसैन्यम् ॥ ९ ॥

पुरा समाक्रान्तमहेन्द्रभूभृत्स सिन्धुराजं गुरुभीष्मदुर्गम् ॥
व्यलङ्घयत्तं मनसा समानप्रवृत्तिरभ्रान्तगतिः परौघम् ॥६॥

शङ्कं प्रतस्थे ॥ इति वा। शमीं प्राप्य गृहीतनिजास्त्रः समिद्धोऽग्निरिव ॥ पक्षे ऋद्धदीप्तिः गृहीतहेतिः गाण्डिवादिसाधनवान् शमीं प्राप्य नरेन्द्रसूनोः दुर्योधनाच्छङ्कां विहाय विजयप्रीतिं अर्जुन इति प्रसिद्धिं कुर्वन् सोर्जुनः प्रकाश एव प्रतस्थे ॥ ४ ॥

गच्छन्निति। सम्पातिना जटायोर्ज्येष्ठभ्रात्रा पत्ररथेन पक्षिणा सूचितकार्यसिद्धिः 'पतत्पत्ररथाण्डजा' इत्यमरः॥ करिनक्रोपमजलचरविशेषैः करालं भीषणं ॥ 'करालं भीषणे तुङ्गे दन्तुरे चाभिधेयवदिति' विश्वः॥ अग्रे पुरः घोषेण शब्देनोद्धतं शत्रुसैन्यमिव समुद्रं हनुमान्ददर्श ॥ पक्षे शकुनप्रदैः पक्षिभिः सूचितेष्टसिद्धिः ॥ शीघ्राश्वरथेन सुष्ठु उपचितेति वा। 'पत्रं वाहनपक्षयोरि'त्यमरः॥ करिण इव नक्रास्तैर्भीषणमब्धिभिवारिसैन्यं। धीरोऽर्जुनः ॥ ९ ॥

पुरेति ॥ आक्रान्तमहेन्द्रपर्वतः मनसा तुल्यवेगः अभ्रस्याकाशस्यान्ते मध्ये गतिर्यस्य स हनुमान् गुरुं महान्तं भीष्मं भयानकं ॥ दुर्गं दुरवगाहं परौघं उत्कृष्टजलवेगं सिन्धुराजं समुद्रमतिचक्राम ॥ पक्षे पूर्वमाक्रान्तो महानिन्द्रो भूभृत् दुर्योधनो येन। मानेन चित्तसमुन्नत्या सहिता प्रवृत्तिर्यस्य। न भ्रान्ता गतिः बुद्धिर्यस्य सोर्जुनः जयद्रथसहितं द्रोणभीष्माभ्यां दुर्गं परेषां शत्रूणामोघं समूहं मनसा व्यलङ्घयत् ॥ 'वृन्दं परंपरायां चाप्योघो वेगे जलेपि चे'ति विश्वः ॥ ६ ॥

शैलेप्यसावस्खलितप्रवृत्तिर्गच्छन्नदीनोत्प्लवनप्रगल्भः ॥
प्राप्योपकण्ठं परमण्डलस्य ददर्श संस्थानविशेषशोभाम् ॥ ७ ॥
परचक्रं परिक्रामन्नशोकगहनं गतः ॥
क्षणादिव कृतार्थोभून्माहेयीदर्शनेन सः ॥ ८ ॥
दृष्ट्वैव तां भास्वरराजगोत्रां दीनामनाथां क्षितिरेणुकीर्णाम् ॥
परोपरोधव्यसनातिभारादशोचयल्लङ्घितगोप्रचारः ॥ ९ ॥

शैलेइति ॥ असौ मारुतिः जिष्णुश्च शैले विश्रमार्थं अब्धि-प्रहिते सुनाभपर्वते मार्गस्थितगिरौ चाप्रतिहतगतिः नदीना-मिनस्य समुद्रस्योल्लङ्घने अदीने प्रशस्ते उत्प्लवने च दक्षः परेषां शत्रूणां मण्डलस्य देशस्य समूहस्य च समीपं प्राप्य । संस्थानविशेषं रचनाभेदस्य यथोचितबलविन्यासस्य च शोभां दृष्टवान् ॥ ७ ॥

परेति ॥ लङ्कापुरमवगाहमानः अशोकवनं प्राप्तः स मारुतिः। मह्याः अपत्यं स्त्री माहेयी सीता । स्त्रीभ्यो ढक् । तद्दर्शनेन क्षणादल्पकालादिव कृतकृत्योभूत् ॥ पक्षे शत्रुसैन्यमतिक्रम्य गच्छन् शोकगहनमप्राप्तः सोर्जुनः माहेयीनां गवां दर्शनेन क्षणादुत्साहवान् ॥ 'चक्रं सैन्यरथाङ्गयोः । ग्रामजाले कुलालस्य भाण्डे राष्ट्रास्त्रयोरपी'ति विश्वः ॥ 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षण' इत्यमरः ॥ 'माहेयी सौरभेयी गौरिति' च ॥ ८ ॥

दृष्ट्वेति । तेजस्विराजवंशजामुल्लसन्नृपगोत्रां समूहं च । परो रावणो दुर्योधनश्च पर उत्कृष्ट उपरोध इति वा ॥ तत्कृतक्लेशात् लङ्घितसमुद्रजलविस्तारः अतिक्रान्तधेनुदुर्गमश्च मारुतिरर्जुनश्च तां सीतां गव्यां च दृष्ट्वा एवामोचयत् आश्वासेन परावर्त्तनेन च ॥ अशोचयदिति पाठे शुशोचेत्यर्थः॥ गवां समूह इत्यर्थे 'इनित्र-

तस्याश्च गोपालसमागमाशां सम्पाद्य संदर्शितराजचिह्नम् ॥
स व्यञ्जयामास हरेस्तनूजमात्मानमर्कात्मजशासनस्थम् १०

प्रयत्नवानुत्तरकार्यसिद्धये
प्रदर्शयिष्यन्बहुशक्तिसम्पदम् ॥
सतालबाणासनकर्षिणां द्विषां
पुरः स्फुरत्केतुवनं बभञ्ज सः ॥ ११ ॥

सम्भ्रान्तद्रोणमुद्यच्छकुनिकलकलं विह्वलोलूकसार्धं
सद्योविक्षिप्तगुल्मं क्षपितनृपतरुक्षुण्णपुन्नागपूगम् ॥
अद्धालूनाश्वकर्णं प्रमथितविपुलं श्रीफलं धूतधात्री-
चक्रं चक्रे सशोकास्पदमरिगहनं प्रागशोकाभिरामम् ॥१२॥

कव्यचश्चे'ति त्रः॥ 'गव्या गोत्रा गवां वृन्दे' इत्यमरः ॥९॥

तस्या इति ॥ तस्याः सीतायाः गव्यायाश्च गोपालो भूपो रामो गोपस्य समागमः संगमनं सम्यगागम्यतेनेन प्रतिपादनमुपमानं च हरेर्वायोरिन्द्रस्य च अर्कात्मजस्य सुग्रीवस्य कर्णस्य च शासने आज्ञायां निग्रहे च ॥ 'शासनं राजदत्तोर्व्यां लेखाज्ञाशास्त्रशास्तिष्विति' विश्वः ॥ १० ॥

प्रयत्नवानिति । उत्तरस्यानन्तरस्य वैराटेश्च ॥ कार्यस्य रामानयनादेर्धेनुपरावर्त्तनस्य च बहुशक्तिसंपदं एकैकवानरस्यैवंरूपातां शस्त्रादिसामग्रीं च तालादिवृक्षान् कार्मुकं च । द्विषां रक्षसां कौरवाणां च । पुरः सीतायाः । स्फुरत्पताकमग्रे प्रसरध्वजं च । वनं च अशोकवनिकां समूहं च भञ्ज उन्मूलन पराभवश्च॥११॥

संभ्रान्तेति । द्रोणः काको गुरुश्च । शकुनिः पक्षी सौबलश्च उलूकः पेचकस्तत्पुत्रश्च । गुल्मः स्तम्बः सैन्यरक्षणं च । नृपतरुराग्वधो नृपा एव तरवश्च । पुन्नागो वृक्षविशेषः श्रेष्ठपुरुश्च। पूगः क्रमुकः वृन्दं च । अद्धा तत्वतः। 'तत्त्वे त्वद्धाञ्जसा द्वयमि'त्यमरः । अश्वकर्णो

पराभवात्परिकुपितेन भूभृता
प्रचोदिताः प्रचुरबला बलाधिपाः ॥
समुद्ययुस्तमुपरि तोरणस्थितं
शरावलीविरचितदूरदुर्दिनाः ॥ १३ ॥
उदायुधैर्व्यरुचदसौ पताकिभि-
र्विरोधिभिर्मृधभुवि कोष्टकीकृतः ॥
तडिच्छटाद्युतिजटिलैर्बलाहकै-
र्बलाकिभिर्वृत इव विन्ध्यभूधरः ॥ १४ ॥

वृक्षविशेषः।नुन्नाः पाठान्तरे लूना अश्वा यस्य स राधेयश्च।श्रीफलो बिल्वः लक्ष्मीफलं च। धात्री आमलकी भूमिश्च।प्रागशोकेन हनुमत्पूर्वदृष्टसीताधिष्ठितवृक्षेण सुन्दरं तन्मात्रशेषं पूर्वं शोकशून्यं च। अरिगहनं रावणवनं कौरवसैन्यं च। स मारुतिः अर्जुनश्च। शोच्यं चकार। 'द्रोणः काके कृपीपताावि'ति विश्वः।'शकुनिः पुंसि विहगे सौबले कच्छपान्तरे' इति मेदिनी। 'उलूकः पुंसि काकाराव- पि भारतयोद्धरी'ति विश्वः॥ 'गुल्मः सेनाघटे स्तम्बे सैन्यरक्षणकाद्गिदो' रिति प्रकाशः॥ 'पूगः क्रमुकवृन्दयो'रित्यमरः। 'आरग्वधे राजवृक्ष' इति च ॥ 'अशोकं त्रिषु निःशोके पुंसि कङ्केलिपादपे' इति मेदिनी ॥ १२ ॥

परेति। भूभृता रावणेन दुर्योधनेन च। तं मारुतिं जिष्णुं च। उपरि ऊर्ध्वतोरणे बहिर्द्वारे स्थितं परितः सर्वतः संग्रामस्थं च॥ 'उ सम्बोधनरोषोक्त्यो'रिति मेदिनी। उपरित उत्कर्षंत इति वा ॥ १३ ॥

उदायुधैरिति ॥ असौ मारुतिर्जिष्णुश्च कोष्ठकीकृतः मण्डलीकृत्यावरुद्धः ॥ १४ ॥

चिरोज्झितानपि परमर्मभेदिनः
सपत्रिणस्तृणवदचिन्तयत् क्षणात् ॥
व्यलोडयद्रणभुवि वैरिमण्डलं
मदोत्कटो गज इव पल्वलं बली ॥ १५ ॥

निरन्तरशरव्राततिरोहितदिगन्तरः ॥
ससैन्यपूरः परितः प्राप दक्षस्तमाहवे ॥ १६ ॥

विदलितरथवंशं मङ्क्षु भग्नाक्षभावा-
त्प्रमथितबलनाथं रुद्धभीष्मप्रभावम् ॥
क्षपितकृपकृपाणं तत्तदाकर्णकृष्ट-
स्फुरितविपुलचापः स स्म सैन्यं धुनोति १७

निबद्धवैरं सृजता शिलिमुखान्
प्रवर्त्तितानल्पतरास्त्रतेजसा ॥
स राजपुत्रेण जितेन्द्रतेजसा
न्यरोधि दुर्योधन उद्यतोपि सन् ॥ १८ ॥

चिरेति ॥ स मारुतिर्जिष्णुश्च 'मदोत्कटो मदकल' इत्यमरः ॥ १९ ॥

निरन्तरेति ॥ सैन्यपूरसहितः अक्षो रावणिः तं मारुतिं प्राप ॥ पक्षे सुयोधनसैन्यौघस्तं जिष्णुं प्राप ॥ आहवे दक्षः १६

विदलितेति । मंक्षु शीघ्रं अक्षो रावणिः रथावयवभेदश्च भीष्मो भयङ्करो गाङ्गेयश्च । कृपाशून्याः कृपाणाः शारद्वतखड्गश्च कर्णपर्यन्तं कृष्टं कर्णेन राधेयेन च । स मारुतिर्जिष्णुश्च ॥१७॥

निबद्धेति । अनल्पतरं अस्त्रं ब्रह्मास्त्राणि च राजपुत्रेणेन्द्रजिता अर्जुनेन च न्यरोधि जगृहे आवव्रे च । दुःखेन योध्यते दुर्योधनो मारुतिः कौरवेन्द्रश्च ॥ १८ ॥

विपक्षवीरैः समितिं प्रवेशितः
समीक्ष्य राजानमसौ सुरद्विषाम् ॥
धरात्मजानिग्रहणप्रतिक्रिया-
निवेदितार्थैर्वचनैरकोपयत् ॥ १९ ॥

ततो हनूमान्विजयाङ्कभूतस्वरेण घोरेण नदन्परेषाम् ॥
लाङ्गूललग्नेन हुताशनेन ददाह लङ्कामिव चित्तवृत्तिम्॥२०॥

एवं प्रकाशीकृतकार्यसम्पद्धरेः कुमारो हरिदश्वकल्पः ॥
विरोधिनां मूर्ध्नि निधाय पादं यशोच्छमुष्णीषमिव न्यमुष्णात्

प्रभाविनोदीप्रबलाम्बुराशेर्विलङ्घनाल्लब्धजयोत्तरश्रीः ॥
नृपप्रियोपायनरत्नहारी पुनः समीयाय तदात्मवर्गैः ॥२२॥

विपक्षेति । रक्षोभिः कौरवैश्च । समितिः । सभा सङ्ग्रामश्च । 'समितिः समवेतार्थे सभायामपि सङ्गरे' इति विश्वः ॥ सुरद्विषां रक्षसां देवद्रुहां च । राजानं रावणं सुयोधनं च । धरात्मजा सीता प्रतीकाररूपार्थप्रकाशकैर्वाक्यैः ॥ १९ ॥

तत इति ॥ विजयाङ्कोऽर्जुनस्य ध्वजश्च पुच्छलग्नाग्निना लङ्कां ददाह । तेन पुरा लङ्कामिव शत्रूणां चित्तवृत्तिं च ।! रामायणपक्षे न चिन्वेति सहित्वे (?) जयचिह्नेन स्वरेणेति वा ॥ पक्षे 'वाशरी'ति विसर्गप्रवृत्तौ विसर्जनीयस्य सः ॥ २० ॥

एवमिति । हरिर्वायुरिन्द्रश्च यशो न्यमुष्णात् उष्णीषमिवाच्छं यशः उष्णीषमिवोष्णीषं च ॥ 'उष्णीषं च शिरोवेष्टे किरीटे लक्षणान्तरे' इति मेदिनी ॥ २१ ॥

प्रभेति । लाङ्गूलाग्निदीप्तिरब्धौ निर्वापकः पुनस्तल्लङ्घनात्प्राप्तजयोत्कृष्टश्रीः सीतादत्तरामाश्वासनचूडामणिप्रापकः सः स्ववर्ग्यैः अङ्गदादिभिः पक्षे प्रभावयुक्तस्य दीप्तस्य बलाब्धेः पराभवाल्लब्धजया वैराटिःश्रीर्यस्मात् । विराटप्रियस्योपायनस्य रत्न-

ततः समृद्धाङ्गदहेमकुण्डलाः
समेत्य सर्वे कृतमन्त्रनिश्चयाः ॥
कृतानुभावान्मधुरोचितश्रियः
क्षमापतेस्ते पुरतोवतस्थिरे ॥ २३ ॥

उपकारगुणज्ञेन राज्ञा तद्विहितस्तदा ॥
केलीकलहसंवृतः प्रहारोपि स चक्षमे ॥ २४ ॥

दृष्ट्वैव चूडामणिशोभिनरतांस्तच्छक्तिसम्पादितभूरिकार्यः ॥
सम्भावयामास चिरं नरेन्द्रः श्रुतप्रियोदन्तनितान्तहृष्टः २५

स्य च जातिश्रेष्ठगोधनस्य च ॥ 'रत्नं स्वजातिश्रेष्ठेपी'त्यमरः ॥ उपायनमुपाग्राह्यमुपहारस्तथोपदेति ' च । स्ववर्ग्यैर्युधिष्ठिरादिभिः ॥ २२ ॥

तत इति ॥ सर्वे हनुमदादयो युधिष्ठिरादयश्च समृद्धमङ्गदो बालिसुत एव हेमकुण्डलमलंकारो येषां ते प्रवृद्धसौवर्णकर्णभूषणाश्च तत्कृतोनुभावः प्रभावो मतिनिश्चयो यैस्तैः ॥ ' अनुभावः प्रभावे स्यात्सतां च मतिनिश्चय'इत्यमरः । मधुना मार्गस्थमधुवनस्थेन रोचिता दीप्ता मधुरा मनोज्ञा उचिता च श्रीर्येषां ते क्षमापतेः सुग्रीवस्य विराटस्य च पुरतोग्रतः पूर्वमेव तदासने च । 'स्यात्पुरः पुरतोग्रत'इत्यमरः ॥ इह पुरतः शब्दस्यासाधुत्वात् ' तेथ पुरोवतस्थिरे ' इति पाठ्यम् ॥ २३ ॥

उपेति । पदकारो वानरकृतसीताशुभोदन्तानयनरूपो विराटेन स्वपरिपालनं च राज्ञा सुग्रीवेण युधिष्ठिरेण च तैरङ्गदादिभिः तेन विराटेन च कृतः केल्यां मधुपानक्रीडायां पाशक्रीडायां प्रहारो दधिमुखस्य पाशेन स्वस्य च क्षान्तः ॥ २४ ॥

दृष्ट्वैव । तानङ्गदादीन् युधिष्ठिरादींश्च चूडामणिना सीताप्रहितेन प्रातिस्विकेन च नरेन्द्रो रामो विराटश्च । प्रियायाः

प्रभञ्जनस्य द्विषतां जिष्णोरात्मभवस्तदा ॥
सत्कृत्य सुहृदां मध्ये राज्ञा दत्तोत्तरो बभौ ॥२६॥
सदुत्तरोदारगुणसन्तोषितहरीश्वरः ॥
रेजे सौभद्रताविष्टः कामदेवइव श्रिया ॥ २७ ॥

इति राघवपाण्डवीये सुन्दरवैराटीये संगमनं नाम षष्ठः सर्गः समाप्तः ॥ ६ ॥

सीतायाः । उदन्तः शत्रुजयगोधनप्रत्यानयनादेः प्रियस्य वृत्तान्तश्च ॥ २९ ॥

प्रभञ्जनस्येति । द्विषतां जिष्णोः प्रभञ्जनस्य वायोः पुत्रो हनूमान् सुहृदां जाम्बवदादीनां मध्ये सत्कृत्य संमान्य रामेण दत्तप्रतिवाक्यः शुशुभे । पक्ष वैरिणां भञ्जनस्य जिष्णोरर्जुनस्य पुत्रोऽभिमन्युः कृष्णादिसमक्षमभिमत्य सत्कारपूर्वकं संमान्य विराटेन दत्तोत्तरा निजकन्या यस्य सः । 'उत्तरा दिग्विशेषे स्यात्स्नुषायामर्जुनस्य चे'तिविश्वः ॥ २६ ॥

सदिति । शोभनैः प्रतिवाक्यैरुदारैर्गुणैः प्रार्थितसुग्रीवः भद्रता रुद्रावतारत्वात्तया युक्तः । 'भद्रो रामवरे हस्तिजातौ मेरुकदम्बके । शंभौ शुभयुते पुंसि क्लीबे भद्रं तु मङ्गले'इति हैमः॥ असौ मारुतिः पक्षे सती उत्तरा स्त्री यस्या उदारगुणैः संतोषितो हरिर्मातुलः कृष्ण ईश्वरो राजा विराटश्च येन सुभद्रात्मजत्वेन पुत्रोभिमन्युः कामदेवः स्मरः काव्यप्रयोजकश्च स ह्युत्तर आयतिरुदर्को वा यस्य सः दाराणां गुणैः संतोषितजनकीभूतकृष्णः । दाराणां रत्या गुणैः संतोषितो हरः स्वसुहृदश्चन्द्रस्येश्वरः शिवो येनेति वा कल्याणरूपतां प्राप्त इति । स्मरपक्षे तु सद्भिः विद्यमानैरुत्कृष्टैर्वदान्यगुणैः संतोषितहरिहरः । 'सत्ये

साधौ विद्यमाने प्रशस्तेऽभ्यर्हितेऽपि सदि'त्यमरः। उदारो द.तृम- हतो'रिति च ॥ २७ ॥

आवश्यकपदश्लेषव्याचिख्यासावशात्मनः ।
लक्ष्मणस्य कृतौ षष्ठः सर्गोयं समपद्यत ॥ १ ॥

इति राघवपाण्डवीये काव्ये टीकायां षष्ठः सर्गः समाप्तः॥६॥

---

# सप्तमः सर्गः ।

अथ नृपतिरुपेत्य मित्रवर्गै-
र्हरिबलभद्रमुखैः प्रणीतमन्त्रः ॥
अवगतरिपुरात्मचक्रवृद्धया
निजविजयोचितयत्नमन्वतिष्ठन् ॥ १ ॥

ततो युगान्तक्षुभिताब्धिकल्पाः
स्वभारभुग्नोरगराजकण्ठाः ॥
स्फुरत्प्रभा वानरपुङ्गवानां
दिगन्तरेभ्यः पृतनाः समीयुः ॥ २ ॥

सन्नद्धसैन्येषु बलाधिपेषु
ततस्ततो भूपतिमाश्रयत्सु ॥
विरोधिचक्रं बहु धार्तराष्ट्रं
चिन्ताभिरन्तर्गतशल्यमासीत् ॥ ३ ॥

अथेति । नृपतिः रामोयुधिष्ठिरश्च हरिबलेषु वानरसैन्येषु भद्र- मुखैर्वाग्मिभिः कृष्णतालाङ्कादिभिश्च स्वसैन्यवृद्ध्या तत्त्वेन निश्चितः रावणः सुयोधनश्च येन ॥ १ ॥

तत इति । स्फुरद्दीप्त्योर्वानरश्रेष्ठानां दीप्तप्रभावा राज्ञां च सेनाः ॥ २ ॥

संनद्धेति । भूपतिं रामं युधिष्ठिरं च । विरोधिनो रावणस्य दिग्विजयेन धृतवैराणां राज्ञां च । चक्रं सैन्यं समूहश्च बहुधा

कृतोद्यमः शत्रुजये यथाव-
द्राजा सराष्ट्राणि वनानि तीर्त्वा ॥
महाविपद्वारिनिधिं तितीर्षु-
र्वेलावनान्तं प्रतिपद्य तस्थौ ॥ ४ ॥

सा सह्यभूभृत्कटकान्तसक्ता धीरा महेन्द्रस्य विलङ्घनेपि ॥
समं समुद्रस्य पयःसमृद्ध्या नरेन्द्रसेना प्रतिगर्जति स्म॥५॥

अथ नृपमनुवेलं सेव्यमानं बलौघै-
रगणितदशकण्ठोद्दण्डकोदण्डशक्तिः ॥
अनिलसुतनिबद्धप्रीतिरागत्य दूरा-
त्क्षितिघटितकिरीटं राक्षसेन्द्रो ववन्दे ॥ ६ ॥

प्रकारेणार्त्तराष्ट्रं धृतराष्ट्रसम्बन्धि च। शल्यं दुःखं शल्यो मद्राधिपश्च। पाण्डवैः विरुद्धाः नृपाः प्रायोरिपक्षे बभूवुः। अतएवैकादशाक्षौहिण्यः सुयोधनस्यासन् सप्त चैतेषां। धार्तराष्ट्रमण्डलमन्तरभ्यन्तरे चिन्ताभिः विरोधिनिश्चितविरोधप्राप्तमद्राधिपं चेति कश्चित् ॥ ३ ॥

कृतेति। राजा रामो युधिष्ठिरश्च। महती विपद्यस्य सः सागरं तितीर्षुः महाविपदमेवाब्धिं च। वेलायाः समुद्रतीरं भूमेः वनान्तं त्रयोदशवर्षावधिरूपायाः अवनं रक्षणं तस्यान्तं च। 'वेला काले च सीमायामब्धेः कूलविकारयोरि'ति मेदिनी ॥ ४ ॥

सेति। सा रामसेना सह्यस्य गिरेर्नितम्बदेशे स्थिता महेन्द्रगिरेः लङ्घने च धीरा धृतोत्साहा समुद्रस्य पयःसंपदासह प्रतिजगर्जेति सहोक्तिः। समं लक्ष्यासहितं पयः प्रतिसमं यथा स्यादिति कश्चित्। पक्षे असह्या भूभृतो राजानः। कटकं। सैन्यं महेन्द्रः शक्रः। समं तुल्यम् ॥ ५ ॥

अथेति। नृपं रामं अनुवेलं वेलासमीपे अवधीरितरावणशक्तिः हनुमता सह बद्धसौहार्दः राक्षसेन्द्रो विभीषणः। पक्षे युधिष्ठिरं

तं भीमतेजःप्रभवं प्रभावी
विपक्षशक्तिप्रतिघातहेतुम् ॥
विभीषणं भूमिपतिः स्वकीय-
प्रसादलक्ष्मीसदनं चकार ॥ ७ ॥

जवेन जिष्णुर्नृपनन्दनोथ द्विपो जिघांसुर्हरिसंग्रहेण ॥
दुर्योधनेन द्विषतावगाढं मध्येपयोराशिमुपाससाद ॥ ८ ॥

तुङ्गत्त्वङ्गत्तरङ्गावलिमिलितमहानक्रमावर्त्तचक्र-
भ्राम्यड्डिण्डीरपिण्डप्रतिगलितसितच्छत्रविस्तारशोभम् ॥
अम्भःसम्भारभारालसजलदघटादुर्दिनीभूतदिक्कं
दिक्कुम्भिप्रौढशुण्डाशकलितसलिलं सागरं सोभ्यपश्यत् ९

वीरसैन्यैः सेवमानं । रावणादप्यधिकबलो भीमसेनप्रियो राक्ष-
सेन्द्रो घटोत्कचः ॥ ६ ॥

तामिति ॥ भीमस्य भयंकरस्य तेजसः प्रभवं भीमसेनसुतं च वि-
पक्षाणां शक्तेर्बलस्य कर्णगतामोघशक्तेश्च । प्रतिघाते वारणे उपक्षये
च । विभिषणं नाम्ना भयानकं च । भूमिपतिः रामो युधिष्ठिरश्च।स्व-
प्रसादहेतुकलक्ष्म्याः लङ्काराज्यप्रसादजन्या शोभा वा ॥ ७ ॥

जवेनेति । जिष्णुः जयनशीलोर्जुनश्च । नृपो दशरथः पा-
ण्डुश्च । हरिर्वानरः कृष्णश्च । दुःखयोधनीयेन वैरिणा रावणेन
मध्येवगाढं कृताधिष्ठानं सुयोधनेन कृतप्रवेशं च। पयोराशिं दा-
क्षिणात्यं द्वारकापारिखाभूतं च । सुवेलजिष्णुरितिपाठे सुवेलो
लङ्कापर्वतः । पक्षे समृद्धा वेला सुवेलं तत्र जिष्णुः। समृद्धावव्य-
यीभावः । प्रणतः शान्तो वा । ' सुवेलः प्रणते शान्ते त्रिषु ना
पर्वतान्तरे' इति विश्वः ॥ ८ ॥

तुङ्गेति । त्वङ्गन्तः कम्पमानाः 'मकरे नासिकायां च नक्रः
पुंक्लीबयोः क्रमादि'तिविश्वः । डिण्डीरः फेनः। सः रामोर्जुनश्च ९

सरसं बहुयोजनाधिवासं धृतगाम्भीर्यमनुज्झितप्रसादम् ॥
स महार्थमुपासदत्समुद्रं ध्वनिभाजं सुकवेरिव प्रम्बन्धम् १०
स वारिपूरस्फुटदारणाय धृतप्रतिज्ञं प्रतिदर्शितात्मा ॥
तमार्चिचद्वारिधिरूर्मिबाहुप्रनुन्नरत्नावलिरञ्जिताङ्घ्रिम् ॥ ११ ॥
वेलादरीदुन्दुभिनाददक्षैस्तरङ्गहस्तैः कृतमङ्गलस्य ॥
उदन्वतोभ्यागमनानुकूल्यादमंस्त संक्रान्तमिवारिचक्रम् १२

दिशानया गच्छ निजेष्टसिद्धये
हरिप्रभावार्पितसेतुबन्धया ॥
इतीव तं स्म स्फुटमाह सागरः
स्वरैर्गभीरैः प्रतिनादयन्दिशः ॥ १३ ॥

सरसमिति । रसो जलं 'शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रव्यरागयोः । देहधातुप्रभेदे च पारदास्वादयो रसः' । योजनं क्रोशचतुष्टयं योजनान्वयश्च । 'चतुःक्रोश्यां च योजनं परमात्मनी'ति विश्वः । गम्भीर्यमगाधता गूढाशयता च प्रसादः स्वच्छतार्थप्रकथनं च । अर्थो रत्नादि प्रमेयं च । ध्वनिः शब्दो व्यङ्ग्यप्रधानं च काव्यं च । स रामोऽर्जुनश्च ॥ १० ॥

स इति । वारिपूरस्य वाड्वार्थे रिपूणामुरसश्च प्रतिज्ञां लक्षीकृत्य प्रदर्शितश्च । आत्मा देवतारूपो जलमयस्वभावश्च ऊर्मय एव बाहवः स्तैः प्रेरिताभिर्मणिपंक्तिभिरनुरंजितचरणं तम् ॥ ११ ॥

वेलेति । अभ्यागमः स्वपत्यागमः प्राप्तिश्च । स रामो जिष्णुश्च । क्रान्तं लङ्घितम् ॥ १२ ॥

दिशेति । हरिर्वानरः कृष्णश्च सेतुरालिर्मार्गन्या(?)वस्थायामिति प्रकाशः । सागरस्तं राममिति स्फुटमाह स्म । पक्षे गम्भीरगर्जितैरर्जुनं प्रत्याहेवेत्युत्प्रेक्षा ॥ १३ ॥

असौ निसृष्टाशनितीव्रवेगान्
हरिप्रभावोज्ज्वलितान्पुरस्तात् ॥
कृताभिपाताञ्जलधौ ददर्श
विचित्रधातुच्छुरितान् महीध्रान् ॥ १४ ॥

सविश्वकर्मोद्भवशिल्पसिद्धं सुदूरसीमन्तितवारिपूरम् ॥
मणिप्रभाभास्वरमभ्रवीथ्यामृजुस्थिताखण्डलचापकल्पं १९
हरिप्रभावोपचितक्षमाभृन्निवेशनैश्चायनतां प्रपन्नम् ॥
महीमहाम्भोरुहनालकल्पं ददर्श सेतुं हरिवंशकेतुः ॥ १६ ॥
स द्वारकान्तां नगरीं गरिष्ठां संप्रस्थितस्तेन यथा नृवीरः ॥
ददर्श धीरो हरिवाहिनीभिर्निरन्तरालानि ककुम्मुखानि १७
पश्यन्मनोज्ञान्कटकप्रदेशान् विलङ्घ्य पन्थानमलङ्घ्यतेजाः॥
विरोधिनाधिष्ठितपूर्वभागं स तं धरित्रीधरमाससाद ॥ १८॥

असाविति । असौ रामोऽर्जुनश्च मुक्तवज्रवेगतुल्यान् वानरसामर्थ्येनोत्पाटितान् वज्रधरेन्द्रप्रभावपलायितांश्च ॥ १४ ॥

सइति । युग्मं । विश्वकर्मसुतो नलवानरस्तस्य देवशिल्पिनश्च शिल्पेन स्वकलाकौशल्येन सिद्धं द्विधा कृतप्रवाहम् । अभ्रवीथ्यामाकाशमार्गे सरलेन्द्रचापतुल्यम् ॥ १९ ॥

हरीति । हरीणां वानराणां कृष्णस्य च प्रभावेणोपस्थितानां क्षमभृतां पर्वतानां राज्ञां च निवेशनैः विन्यासैः शिविरैश्च । निदेशनैरिति पाठे अर्पणैः विनियोगैश्च । अयनतां मार्गतां प्राप्तं सेतुं। स हरिवंशस्य सूर्यकुलस्य केतुः रामः इन्द्रवंशस्य सोमस्य वार्जुनश्च । ददर्श ॥ १६ ॥

स इति । नृवीरो रामोऽर्जुनश्च । द्वारैः कान्तां लङ्कां तां प्रसिद्धां द्वारवन्तीं च । हरयो वानराः कृष्णश्च ॥ १७ ॥

पश्यन्निति । कटको नितम्बः सैन्यं च। विरोधिना रावणे-

विचारमूढस्य चिरानुकूल्यं द्विषोपि कुर्वन् जगतीधरोसौ॥
अमुष्य पादं जुषतस्तदानीं निर्व्याजमात्मार्चनमाचचार१९
बलोपलम्भादवलेपभाजा दैवाद्विपक्षेण पुरो निरस्तः ॥
विभीषणो विद्विषता महार्यः प्रीत्यान्वयासीत्पुरुषोत्तमस्तं २०
मनुष्यमूर्त्तेः पुरुषोत्तमस्य सौहार्दमासाद्य स दैवयोगात् ॥
पौलस्त्यसम्पत्तिमपि स्वकीयभ्रूभङ्गलीलासुलभाममंस्त २१
ससैन्यसुग्रीवसमग्रयानप्रभावसम्पन्ननरनाथजन्मा ॥
स भूमिभर्त्तुः कटकं मनस्वी जवादुपप्लाव्यमुपेत्य तस्थौ२२

न दुर्योधनेन च । अधिष्ठितोपरिभागं आक्रान्तशयनशिरोभागं च। स रामोर्जुनश्च । धरित्रीधरं सुवेलं कृष्णं च । दुर्योधनेन वशीकृतं बलभद्रमिति कश्चित् ॥ १८ ॥

विचारेति । विवेकं ऊढस्य प्राप्तस्य शत्रोरपि रामस्य सैन्यानुकूल्यं कुर्वन्नसौ सुवेलः आत्मानुरूपमर्चनं फलजलाद्यर्पणेन चकार । 'पादाः प्रत्यन्तपर्वता' इत्यमरः । यद्वा विचारेण मूढस्तस्य तद्विहीनस्य शत्रो रावणस्यानुकूल्यं । पक्षे । कृष्णः विचारशून्यस्य द्विषः सुयोधनस्यापि बलेनानुकूल्यं पादोपान्तवर्त्तिनोऽर्जुनस्य निष्कपटमात्मदानेनार्चनं चकार ॥ १९ ॥

बलेति । बवयोरैक्याद्वरस्य ब्रह्मदत्तस्य बलस्य कृष्णसैन्यस्य च दैवं देवसमूहस्तमत्तीति दैवात् तेन विपक्षेण रावणेन भाग्यात् दुर्योधनेन च निरस्तो बहिः कृतः । वैरिणा महार्यो विभीषणनामा वैरिभयङ्करो महार्यश्च । पुरुषोत्तमः पुरुषश्रेष्ठः कृष्णश्च । तं राममर्जुनं च ॥ २० ॥

मनुष्येति । रामस्य च स विभीषणोर्जुनश्च । पौलस्त्यो रावणो धनदश्च ॥ २१ ॥

स इति । सैन्यसहितः सुग्रीवः सैन्यसुग्रीवौ कृष्णाश्वौ च।

सदाशुकोपि प्रतिपक्षवाचा वचोहरः प्राप्य सुसंवृतात्मा ॥
तमुन्नतां संजयशब्दपात्रं श्रियं दधानं नृपतिं निदध्यौ २३
तदाज्ञयासौ गतभीतिरेनं हरिप्रणेतारमिदं जगाद ॥
प्रज्ञेक्षणस्त्वामिदमाह राजा मुखेन मे दूतधूरिस्थितस्य २४

स नरनाथजन्मा रामोर्जुनश्च भूमिभर्त्तुः सुवेलस्य युधिष्ठिरस्य च कटकं नितम्बं सैन्यं च उपलब्धं विध्वंसनीयं तन्नामकनगरोपलक्षितं च । उपष्ठाव्ये राजधानीति च । 'कटकं वलये सानौ राजधानीनितम्बयोरिति ' विश्वः । यदि तु शैब्य एव वासुदेवाश्वो न तु सैन्य इति तदा मेघपुष्पबलाहकाभ्यां विना शैब्यसुग्रीव(योः)शैब्येन विना सुग्रीवस्यैवोपादानम् । 'क्रुद्धाहिभोगप्रतिमासमुत्थिताशक्रायुधानाशिखिसन्धिना वा । ग्रैवान्नावाद्यस्य राजवाहनसुग्रीवनामा तुरगोत्तमः शुभ'इति गणदत्तोक्तेः। ससैन्यैः सुग्रीवैः अश्वविशेषैः समग्रमिति वा । क्वचिद्वक्रोक्तिभिः भङ्गीभिश्चेत्युक्ते सैन्यपदे शैब्यपदप्रक्षेप इत्यपि कश्चित्॥ २२ ॥

तदेति । शुको रावणमन्त्री । 'शुको व्याससुते कीरे रावणस्य च मन्त्रिणीति ' विश्वमेदिन्यौ । वचोहरो दूतः । वैरिणो रावणस्य वचनेनागत्य सुगोपितात्मा पक्षिरूपधारित्वात् समुन्नतस्कन्धं श्रियं दधानं जयशब्दार्हं नृपतिं रामं दध्यौ ददर्श। पक्षे आशुकोपी दुर्योधनः यद्यपि धृतराष्ट्रेण प्रहितस्तथापि दुर्योधनाभिमतराज्याप्रदानाभिसन्धिनैव तेन प्रहितत्व त्तस्यास्वातन्त्र्याच्च । वस्तुतो दुर्योधनेन प्रहेतः सञ्जयमात्रं तन्नामा समुन्नतां श्रियं दधानं युधिष्ठिरम् ॥ २३ ॥

तदेति । तस्य रामस्य युधिष्ठिरस्य च रावणदुर्योधनयोराज्ञयेति या गता भीर्वानरकृतपक्षोल्लुञ्चनादि शुकस्य अनापद्धिप्रयुक्तादि सञ्जयस्य। हरीणां वानराणां प्रणेतारं नायकं सुग्रीवं।

त्वया हि मत्प्रीतिपरायणत्वा-
दङ्गीकृता साधुजनप्रवृत्तिः ॥
अतः स्वयोग्ये पथि वर्त्तितव्यं
न ते सुवेलाक्रमणेन सिद्धिः ॥ २५ ॥

आत्मोचितं प्रोह्य वनान्तवासं
युद्धाय मा चापलमद्य कार्षीः ॥
अनात्मनीने पथि वर्तमानाः
पुंसो हि लोकाद्भृशमुद्विजन्ते ॥ २६ ॥

यथार्थमेतत्कुरुराजवाक्यं विचार्यमालाघवसंश्रयी भूः ॥
हितोपदेशेषु पराङ्मुखानामदूरसंस्था विपदो हि पुंसाम् २७

एवं विपक्षदूतेन व्याहृता वाक्यपद्धतिः ॥
प्रतिजज्ञे सरस्वत्या हरिराजमुखोत्थया ॥ २८ ॥

हरिः कृष्णः प्रणेता यस्य तं युधिष्ठिरं च । प्रज्ञेक्षणो बुद्धिसंपन्नो रावणोन्धो धृतराष्ट्रश्च । २४ ॥

त्वयेति । सुग्रीवेण युधिष्ठिरेण च मम रावणस्य धृतराष्ट्रस्य च प्रीतिवशात् साध्वतिशिष्टं स्थितिः स्वयोग्ये स्वार्हे वनवासरूपे च सुवेलस्य पर्वतस्य शोभनायास्त्रयोदशाब्दरूपायाः वेलायाश्चाक्रमणेनाध्यारोहणेनोल्लङ्घने च सिद्धिः मत्प्रीतिः राज्यलाभश्च न स्मृतः ॥ २५ ॥

तदेवाह आत्मेति । रामायणपक्षे सुगमम् । पक्षान्तरे प्रतिज्ञानिर्वाहाय स्वस्य योग्यम् । नात्मने हितो नात्मनीनः ॥२६॥

यथेति । एतद्राज्ञो रावणस्य वाक्यं विचार्य यथार्थं कुरुराघवो रामः पक्षे तथ्यं एतत्कुरुराजस्य वाक्यं विचार्य रलयोरैक्यात् लाघव लघुत्वम् ॥ २७ ॥

एवमिति । हरिराजः सुग्रीवः कृष्णयुधिष्ठिरौ च । प्रतिजज्ञे खण्डिता दूषितेति यावत् ॥ २८ ॥

अहो महन्नैपुणमस्य भूभृतो
निवृत्तये नोदयितुं विरोधिनः ॥
भवन्ति सुव्यक्तिमनात्मवेदिनः
परोपदेशेषु विशेषपण्डिताः ॥ २९ ॥
स चेद्ध राजा प्रतिदानपूर्वं शान्तिं न वाञ्छत्युचितां कुलस्य॥
दक्षानस्यापि दशाननस्यादमुष्य हीनाहतबन्धुसूनोः॥३०॥
शुभाशुभे कर्मणि संनिविष्टं
धर्मो यथा पश्यति लोकमेकः ॥
तथा जनश्चेदखिलोपि धर्मं
जगत्यधर्मस्य कुतोवकाशः ॥ ३१ ॥
स एव तावत्प्रसमीक्ष्य धर्मं
समाचरत्यात्महितं विधेयम् ॥
न यावदारोहति हन्तमौर्वी
भीमानुजस्येष्वसनं खरारेः ॥ ३२ ॥

अहो इति । निवृत्तिः वैराग्यं युद्धात्परावर्त्तनं च ॥ २९ ॥

सचेदिति । धराजा सीता ह स्फुटं राजा च ॥ 'तु हि च स्म ह वै पादपूरणे' इत्यमरः । प्रतिदानं प्रत्यर्पणं सीतायाः राज्यस्य च । 'पुमानुपनिधिर्न्यासः प्रतिदानं तदर्पणमि' त्यमरः । 'शान्तिः शमेपि कल्याणे' इतिविश्वः । दशाननस्याप्यमुष्या दीना दशा न स्यादिति न किन्तु स्यादेव पक्षे अमुष्य धृतराष्ट्रस्य दशाननस्य या दशा जाता सापि स्यात् तस्यापि दीना दशा स्यादिति वा दशा अन्तिमावस्था आनने मुखेस्येति वा दशा अनिति प्राणितीति वा ॥ ३० ॥

शुभाशुभे इति ॥ ३१ ॥

स एवेति । रावणो धृतराष्ट्रश्च भीमो भयंकरोनुजो लक्ष्म-

स सौष्ठवव्यञ्जितशौर्यमार्गैः
प्रत्याहतो वानरवर्यवाक्यैः ॥
सद्यः पुरं प्राप्य जनेश्वरे त-
द्वचो विषं सर्प इवोत्ससर्ज ॥ ३३ ॥

आगामि संग्रामविपन्निवृत्तावुपायचिन्ताकुलचित्तवृत्तेः ॥
क्षत्राभियुक्तस्य विमोहभाजः प्रजागरोभूद्रजनीषु राज्ञः ३४

अत्रान्तरे भूमिपतिप्रियार्थं पयोधिसीमाधिगतोरुसैन्याः ॥
हरीश्वरा भूमिभृतोध्यरोहन्तुङ्गां प्रतिज्ञामिव तुङ्गभूमिम् ३५

भूभृच्छिरश्छेदविधानदक्षे मायाविनि क्षुभ्यति राक्षसौघे ॥
वैधव्यचिन्ताचकिता चकम्पे नरेद्रदारैर्धरणीसमेतैः ॥३६॥

णोस्य अर्जुनस्य च। इष्वसनं धनुः। खरो रावणानुजस्तन्निहन्तुः रामस्य खराणां तीक्ष्णानामरेः द्वेष्टुश्च । खरो निर्विचारो गतभीर्दुर्योधनोरिरस्येति वा ॥ ३२ ॥

स इति। स शुकः सञ्जयश्च वानरवर्यः सुग्रीवः । पक्षे नरवर्यस्य कृष्णादेर्वाक्यैः प्रत्याहत इव ॥ 'वा स्याद्विकल्पोपमयोरि'ति अमरः। पुरं लङ्का हास्तिनं च । जनेश्वरे रावणे धृतराष्ट्रे च ॥ ३३ ॥

आगामीति। क्षत्रेण क्षत्रा विदुरेण च अभियुक्तस्याभियातस्य उपदिश्यमानस्य च। राज्ञो रावणस्य धृतराष्ट्रस्य च। प्रजागरो निद्राभङ्गस्तन्मूलककथाप्रबन्धश्च ॥ ३४ ॥

अत्रेति। भूमीति ॥ सीतार्थं धृतराष्ट्रप्रीतये च हरीश्वरा वानराधिपाः कृष्णनाथाश्च भूमिभृतः सुबेलस्य तुङ्गभूमिं तुङ्गां प्रतिज्ञामिवाध्यारूढाः। पक्षे भूमिभृतो राजानः तत्प्रतिपक्षहननविषयिणीं प्रतिज्ञामिव तुङ्गभूमिमुत्कर्षकाष्ठामधिरूढाः ॥ ३५॥

भूभृदिति ॥ भूभृतो रामस्य राज्ञां राक्षसौघे विद्युज्जिह्वादौ ध-

अथाङ्गदं बिभ्रतमुल्लसन्महः
सुरेन्द्रसूनोर्हृदयैकनन्दनम् ॥
समीक्ष्य कार्यस्य गतिं नरेश्वरो
हरिं परेषां नगरीमजीगमत् ॥ ३७ ॥

स यानानिर्ह्रादमुदीरयन्खे सुदूरमध्वानमतीत्यगात् ॥
प्रपद्य मध्यं परमण्डलस्य ददर्श राजानमभीः सभार्यम् ३८

बलाधिपैर्भीष्ममुखैरुपेतं
प्रसिद्धभूरिश्रवसं हरिस्तम् ॥
सकर्णशल्यं वच इत्यवोच-
त्प्रकाशगम्भीरमहार्थजातम् ॥ ३९ ॥

टोत्कचादौ च । नरेन्द्रदारैः सीतया दुर्योधनगद्दिस्त्रीभिश्च धरणी भूश्चकम्पे कम्पिताभूत् । सीताजननीत्वे नौचित्यात्पत्युरन्तरङ्गत्वाच्च ॥ ३६ ॥

अथेति ॥ रामो वालिनः पुत्रमङ्गदं प्रस्फुरत्तेजो दधानं लङ्कां प्रति कार्यस्य दूतस्य गतिं ज्ञानं सामपूर्वकत्वस्थितिं वा ॥ पक्षे युधिष्ठिरः केयूरं दधानं । जिष्णोः सखायं कृष्णं हास्तिनपुरं कार्यस्य कर्णभेदनादेर्मार्गम् ॥ ३७ ॥

स इति अङ्गदः कृष्णश्च यानं प्रयाणं रथश्च । सभायामार्यबलिर्लोकगर्हितं रावणं सभायामार्याद्रोणभीष्मादयो यस्य भार्या गान्धारी तत्सहितं धृतराष्ट्रं च ॥ ३८ ॥

बलेति ॥ भयंकरास्यैः भीष्ममुखैश्चोपेतम् ॥ दशास्यत्वादर्थसिद्धविंशतिश्रोत्रं ॥ विख्यातकौरवयोधविशेषयुतं च ॥ हरिरङ्गदः कृष्णश्च तं रावणं धृतराष्ट्रं च सः श्रोत्रशल्यं वचः राधेयमद्रेशयुक्तं प्रतिवचश्च ॥ ३९ ॥

अनात्मवंशोचितमार्यगर्हितं
सबन्धुमित्रस्य कुलस्य घस्मरम् ॥
त्वमग्रयायी नयपारदाध्वनां
विरोधमीदृग्विधमीहसे कथम् ॥ ४० ॥

तस्मादस्माद्विरम कलहादाशुमात्मीयगोत्रं
क्षोणीभर्त्रे वितर मुषितात्मपालो महेलाम् ॥
नोचेज्जिष्णोरुपहर श्रमये प्राणराशिं
मोहाधानं युधि निजसुहृद्बन्धुभृत्यात्मजानाम् ॥४१॥

निशितविशिखशम्बोत्कृत्तवीतोत्तमाङ्ग-
स्तबकितलहरीभिः शोणिताम्भः सरिद्भिः ॥
नयनिपुण नयावत्क्षाल्यते क्षोणिचक्रं
द्रुतमुपनतकालस्तावदाधत्स्व सन्धिम् ॥ ४२ ॥

वैधव्यव्यथितसुतावरोधबोध-
प्रक्रान्तप्रतिरवमेदुरान्तराणि ॥
स्युर्यावन्न तव गृहाण्यतो विचारं
त्वं तावत्कुरु कुलशान्तये यतस्व ॥ ४३ ॥

अनात्मेति ॥ स्ववंशस्यानुचितं घस्मरं भक्षकमुच्छेदकम् ॥ ४० ॥

तस्मादिति । रामाय युधिष्ठिराय च । सर्वतोक्तिन्नर्थादिति ङीष् । मुषितां चौर्येण द्यूतेन च हृतां महेलां स्त्रियं महतीं इलां भूमिं च ॥ 'महेलामहिलापि चे'ति शब्दभेदः ॥ जिष्णोर्जयनशीलस्य रामस्यार्जुनस्य च ॥ ४१ ॥

निशितेति ॥ नयनिपुणेति सम्बोधनम् ॥ ४२ ॥

वैधव्येति । अवरोधाः स्त्रियः रोदो रोदनं अतस्त्वं विचारं कुरु स्वकुलप्रभावाय यत्नं कुरु ॥ पक्षे अविचारं शीघ्रं यथा स्यात्तथा कुरुकुलं कौरववंशः ॥ ४३ ॥

द्विजोत्तमाकीर्णकुशस्थलाढ्यान्
ग्रामानपि त्वं नियतं विसृज्य ॥
सुखप्रसन्नेन युधिष्ठिरेण
सन्धाय मोदस्व चिराय राज्ञा ॥ ४४ ॥

परिगतनयविद्यान्बिभ्रतो राज्यलक्ष्मीं
विषयरसनिवासे यौवने वर्त्तमानान् ॥
बललुलितमहेन्द्रानात्मजानात्मतुल्या-
न्समरभुवि मुधा त्वं मान्तकायोपहार्षीः ॥ ४५ ॥

इति हरिवदनाद्विनिसृता सा
परिषदि सज्जनसम्मतापि वाणी ॥
शशिरुचिरिव गह्वरे महाद्रे-
र्मनसि परस्य चकार न प्रवेशम् ॥ ४६ ॥

त्वरितमतिवृषाकपेर्गिराद्य-
द्भृकुटिभुजङ्गमलाञ्छितो विपक्षः ॥

द्विजेति । ब्राह्मणैः व्याप्तानि कुशानां दर्भाणां जलानां च स्थलानि तैः सम्पन्नान् ग्रामान् यज्ञियक्षेत्राणि अपिशब्दात् सीतां च निश्चितं विसृज्य मुक्त्वा सङ्ग्रामस्थितेन रामेण सन्धि कृत्वा सुखी भव । 'कुशो रामसुते दर्भे चोक्तेदोषे कुलं जल'मिति विश्वः । पक्षे कुलस्थलादिनाम्नो ग्रामानपि नियतं परिमितं यथा स्यात्तथा दत्वा धर्मराजेन सन्धि कृत्वा अपिः संभावनायाम् । 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपी'त्यमर ॥४४॥

परीति । महेन्द्रः पर्वतभेद इन्द्रश्च समरभुवि मा उपहार्षीः उपहारं बलिं मा कुरु ॥ ४५ ॥

इतीति । हरिरङ्गदः कृष्णश्च । सज्जना माल्यवदादयो भीष्मादयश्च । परस्य रावणस्य दुर्योधनस्य च ॥ ४६ ॥

रिपुकुलबलसारभूतमेनं
तम इव तिग्मरुचिं निरोद्धुमैच्छत् ॥ ४७ ॥
अधिपतिबलनुन्नेष्वञ्जसासौ बलाग्र्य-
त्वरितकृतनिरोधप्रक्रमेषु प्रकामम् ॥
परिषदि निजतेजस्तेजयामास पूर्वं
हरिरिव बलियज्ञो विक्रमाक्रान्तलोकः॥४८॥

त्वरितमिति । शीघ्रं यथा स्यात्तथा अतिवृषा इन्द्रमतिक्रान्तः कपेरङ्गदस्य विपक्षो रावणः सारभूतं श्रेष्ठं एनमङ्गदं ततो राहुः सूर्यमिव रोद्धुमैच्छत् । पक्षे त्वरितमतिर्यथा स्यात्तथा वृषाकपेः कृष्णस्य कर्मधारयो वा विपक्षो दुर्योधनः ॥ 'सारो बले मज्जनिजस्थिरत्वे न्याय्ये चन्देरि च धरे(?)च सारमिति नानार्थः। 'कुलं जनपदे गोत्रे सजातीयगणेऽपि चे'ति विश्वः॥ 'तमोन्धकारे स्वर्भानौ तमः क्लेशे गुणान्तरे । वृषाकपिः पुमान्कृष्णे शङ्करे जातवेदसी'ति मेदिनी ॥ ४७ ॥

अधीति । असावङ्गदः बलेन वीर्येण प्रेरितेषु सैन्यान्यक्षेषु अञ्जसा शीघ्रमारब्धविरोधेषु सत्सु । पत्यावित्यधिपति । विभक्त्यर्थेऽव्ययीभावः । रावणविषयं ।निजं तेजः तेजयामास । उददीपयत् । विक्रमेणातिशक्तितया आक्रान्तो लोको येन ॥ 'विक्रमस्त्वतिशक्तिते'त्यमरः ॥ 'द्राग् झटित्यञ्जसाह्नाय मङ्क्षु द्राक् सपदि द्रुतम्' इति च। 'अञ्जसा तत्त्वतूर्णयोरि'ति विश्वः। पूर्वं बालियज्ञे विशिष्टेन पादविक्षेपेणाक्रान्तभुवनो हरिः विष्णुरिव ॥ पक्षे हरिः कृष्णः अधिपतिर्दुर्योधनः सौबलः शकुनिः अग्र्यो मुख्यो येषां तेषु कृतविशिष्टरोधोपक्रमेषु बलियज्ञ इव निजं नित्यं 'निजमात्मीयनित्ययो'रिति विश्वः ॥ ४८ ॥

दिवि च भुवि च तुल्यं तापमानैर्महोभिः
प्रमथितपरधामा लोचनानि प्रतिघ्नन् ॥
अरितिमिरनिरासाद्दर्शयन्विश्वरूपं
मिहिर इव समुद्यत्सर्वभूतैरशंसि ॥ ४९ ॥

परप्रतापातपसंनिपाता-
त्प्रकीर्य तेजः प्रतिपक्षकक्षे ॥
सुहृत्प्रशान्त्या पुनरेव शान्तिं
प्रापानुकुर्वन्नविकान्तचेष्टाम् ॥ ५० ॥

स क्षिप्रं नृपजननीतिपारदर्शी
स्वैर्वाक्यैः कृतपरपक्षकर्णभेदः ॥
भूभर्तुर्निकटमुपेत्य वैरिवर्गं
व्याचष्टे प्रतिनियतोग्रदण्डसाध्यम् ॥ ५१ ॥

दिवीति । सोऽङ्गदः कृष्णश्च । तापमानैः प्रसरद्भिः प्रतिपातितरावणगृहः दूरीकृतदुर्योधनादिप्रभावश्च । 'धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोरि'ति विश्वः । अरय एव तिमिरं तन्निरासात् विश्वस्यात्मस्वरूपं आत्मनि स्थितं विश्वरूपं च दर्शयन् । आवरकतमोनिराकरणाज्जगद्रूपं प्रकाशयन्नुद्यन् सूर्य इव सर्वभूतैरशंसि स्तुतः ॥ ४९ ॥

परेति ॥ शत्रूणां प्रतापः उत्कृष्टातपश्च । कक्षे शुष्कतृणे । सुहृदः शोभनस्य कृष्णपक्षे सुहृदां कौरवाणां । सूर्यकान्तपक्षे सरसुरातपस्य च प्रशान्त्या शमेन ॥ ५० ॥

स इति ॥ सोऽङ्गदः कृष्णश्च नृपजनन्याः युधिष्ठिरमातुः कुन्त्याः इत्योर्गत्योः कर्णोत्पादककौमारेदानींतनक्रोधाद्यवस्थ्योश्चाभिज्ञः कृतः शत्रुपक्षश्रोत्रोपतापः वैरिवर्गान्तर्गतराधेयोपजापश्च येन भूभर्तुः रामस्य युधिष्ठिरस्य च ॥ वैरिवर्गं राव-

अथोक्तकाले नृपतिर्न्ययुङ्क्त
बलानि रोषादभिषेणनाय ॥
युगान्तमासाद्य यथाम्बुराशिः
स्वाम्भांसि लोकत्रयसंप्लवाय ॥ ९२ ॥

साकं भुवा मत्सरिणां मनांसि
प्रकम्पयन् भूमिपतिः प्रपेदे ॥
द्विषो जिगीषुर्जमदग्निजन्मा
रामः कुरुक्षेत्रमिवाजिभूमिम् ॥ ९३ ॥

अथोद्धतः स्यन्दनसप्तिपत्तिहस्तिस्फुटाटोपनिकामभीमा ॥
रणाङ्गणं प्राप दशास्यसेना पतिप्रणुन्ना पृतना परेषाम् ९४

णादिं दुर्योधनादिं च ॥ ' ईतिर्डिम्बप्रवासयो 'रित्यमरः ॥ प्रवासान्तदर्शक इति वा ॥ ९१ ॥

अथेति ॥ कालः सुमुहूर्त्तो विधिश्च ॥ नृपतिः रामो युधिष्ठिरश्च ॥ 'यत्सेनयाभिगमनमरौ तदभिषेणन'मित्यमरः ॥९२॥

साकमिति ॥ रामो राजा अभिभूमिं प्रपदे ॥ जामदग्न्यः कुरुक्षेत्रमिव ॥ पक्षे युधिष्ठिरः कुरुक्षेत्ररूपां संग्रामभूमिं परशुराम इव ॥ ९३ ॥

अथेति ॥ आटोप आडम्बरः दशास्येन सेना सनाथा । 'इनः सूर्ये प्रभा'वित्यमरः । पतिभिः प्रणुन्ना शत्रूणां सेना पृतना रणाङ्गणं प्राप ॥ दशास्यस्य सेनापतिभिः प्रेरितेति वा ॥ दशास्यस्य सेना रचनाविशेषवतां परेषां रणाङ्गणमिति वा । "पृतना तु स्त्रियां सेना मातृसेनाविशेषयोरि'ति विश्वः ॥ पक्षे अशास्यस्योच्छृङ्खलस्य दुर्योधनस्य सेनापतिभिः अशास्येनावध्येन स्वच्छन्दमृत्युना भीष्मेण सेनापतिनेति वा ॥ 'तवर्गपञ्चमोपान्तमः

अथ गतवति राज्ञः सोदरे शत्रुपक्षं
श्रितवति तदभीष्टं संविधित्सौ युयुत्सौ ॥
अपि सुभटसमेता सा चमूः कान्तिमत्तां
युवतिरिव न लेभे कर्णशोभाविहीना ॥ ९२ ॥

विलोक्य जिष्णुः परमण्डलं त-
च्चिन्तां प्रियापायभयाद्गतोपि ॥
स्थैर्यं प्रपेदे हरियोगलब्ध-
स्वास्थ्यप्रभाविक्रमशोभि रामः ॥ ९६ ॥

ज्ञनं केवलं पुन' रितिविश्वः । सर्वधरस्तु वर्णविकारत्वाण्णत्वमित्याह ॥ ९४ ॥

अथेति ॥ राज्ञो रावणस्य दुर्योधनस्य च सोदरे एकपितरि भ्रातरि युयुत्सौ योद्धुकामे विभीषणे तन्नाम्नि च शत्रौ रामस्य युधिष्ठिरस्य च पक्षं पार्श्वम् । पक्षो मासार्धके पार्श्वे गृहे सखिसहाययोरि'ति विश्वः ॥ कुण्डलादिकृतश्रोत्रशोभाहीना स्त्रीव रावणसेना राधेयरहिता कर्णसेना च न शुशुभे ॥ कर्णो हि भीष्मेण सह स्पर्धमानः 'घृणी कर्णः प्रमादी च तेन त्वर्धरथो मत'इत्यवमतश्च ॥ 'नाहं जीवति गाङ्गेये योत्स्ये'इति प्रतिज्ञाय गतः ॥ ९९ ॥

विलोक्येति ॥ जिष्णुः जेता अर्जुनश्च । प्रियायाः सीतायाः विश्लेषभयात्पुत्रमित्रादिनाशभयाच्च । हरीणां योगेन सङ्गत्या कृष्णोपदिष्टगीतारूपयोगशास्त्रेण च । स्वास्थ्यं निश्चिन्ततां आत्मनिष्ठां च । प्रभाविक्रमाभ्यां शोभमानः रामो दाशरथिः प्रकृतभावनये प्रधीति अभिभयशून्यं क्रमश इति वा ॥ पक्षे प्रभायुक्तं क्रमशः प्रपेदे । अभिरामः सुन्दरः ॥ ९६ ॥

कृत्वोपसत्तिं तरसा गुरूणां
नरेन्द्रसूनुः कलितज्यधन्वा ॥
बभूव भीमो युधि शम्बरस्य
वधं विधित्सन्निव कामदेवः ॥ ९७ ॥

इति राघवीपाण्डवीये महाकाव्ये सैन्यसमुद्योगे लंकाद्वारकुरुक्षेत्रगमनं नाम सप्तमः सर्गः ॥ ७ ॥

---

## अष्टमः सर्गः ।

अथ रघुनृपसूनोरेकतो ध्मायमाने
बधिरितजगदण्डे चण्डकोदण्डघोषे ॥
युगपदुभयसेनोज्जृम्भितोद्दामभेरी-
पटहमुरजनादाध्मातगर्भं नभोभूत् ॥ १ ॥

कृत्वेति ॥ गुरूणां विश्वामित्रादीनां भीष्मादीनां चोपसत्तिं अनुस्मरणाद्युपासनामुपसर्पणं च तरसा वेगेन बलेन वा ॥ नरेन्द्रसुनुः रामो युधिष्ठिरश्च युधि भयङ्करोभूत् रामः कलितधन्वाऽभूत् ॥ युधि भषिणः युधिष्ठिरस्तथाभूत् भीमो भीमसेनश्चेति कश्चित् । कामदेवः स्मरः काव्यप्रयोजकश्च । शम्बरो दैत्यभेदो मृगविशेषश्च ॥ ९७ ॥

आवश्यकपदश्लेषव्याचिख्यासावशात्मनः ॥
लक्ष्मणस्य कृतौ सर्गः सप्तमः समपद्यत ॥ १ ॥

इति श्रीराघवपाण्डवीये काव्ये टीकायां सप्तमः सर्गः समाप्तः ॥ ७ ॥

अथेति । रघुनृपसूनोः रामस्य ध्मायमाने संहन्यमाने शब्दे भवति सति ॥ आध्मातगर्भं पूर्णमध्यम् ॥ पक्षे रलयोः सावर्ण्यात् लघु क्षिप्रं यथा स्यात् । नृपसूनोः युधिष्ठिरस्य ॥ १ ॥

रणभुवि रणरेणौ तूर्यनादे च तूर्णं
स्थगयति जगदण्डं न्यक्कृतान्यप्रवृत्ति ॥
अहह न निरधारि प्राणिनां चेतनाभिः
क्षितिमयमुत विश्वं शब्दतन्मात्रकं वा ॥ २ ॥

काष्ठाः कापि विलिल्यिरे कवलिताः केनापि भानोस्त्विषः
कुत्राप्यस्तमहर्ययौ च कुहचिन्नष्टं नभोमण्डलम् ॥
केनाज्ञायि विलोचनस्य विषयः कालः क्षपाकाप्यभू-
द्ब्रह्माण्डोदरपूरणं रणमहीरेणौ तदा तन्वति ॥ ३ ॥

आरम्भे मदसलिलं मदद्विपानां
माद्यद्दिक्करिकरसीकरं ततश्च ॥
भूरेणुर्जलधरगर्भरेणु पीत्वा
स्वःसिन्धोरपि निरपादपां प्रवाहम् ॥ ४ ॥

प्रचलितहरिचक्रच्छिन्नमूलोपसर्प-
न्नभसि कृतनिरोधः प्रातिकूल्यान्नराणाम् ॥
सपदि धरणिरेणुस्तिग्मभानुं न्यरौत्सी-
दपर इव महीयान् रंहसा सैंहिकेयः ॥ ५ ॥

रणेति ॥ न्यक्कृतेत्यादि क्रियाविशेषणं वा ॥ 'प्रतिपज्ज्ञप्तिचेतने' त्यमरः ॥ शब्दतन्मात्रं शब्दैकमयम् ॥ २ ॥

काष्ठाइति ॥ कुहचिदिति 'किमो वा ह च छन्दसीति' हादेशे परतः 'कुतिहो' रिति कादेशे छान्दसमेतत् तस्थिवानित्यादिवत् क्वचित्कविभिः प्रयुज्यते । अस्तमदर्शनं । कालः प्रलयः ३

आरम्भे इति ॥ ४ ॥

प्रचलितेति । हरयो वानरा अश्वाश्च चक्रं सैन्यं सैंहिकेयो राहुः ॥ हरेश्चक्रं सुदर्शनम् ॥ ५ ॥

आसरोजभवसद्मसर्वतो लोकमुद्गसति रेणुमण्डले॥
नूनमाहितभयं न्यमीलयद्भास्करेन्दुनयने विराट् पुमान् ॥६॥

उद्गाढदुर्दिनविसंस्थुलवृत्तिरारा-
दारब्धगात्रमलनो वसनान्तसङ्गी ॥
आमृष्टगण्डतिलकानि मुखान्यचुम्ब-
द्रागीव रेणुनिकरः सुरसुन्दरीणाम् ॥ ७ ॥

अकालजलदावलीगलितरक्तधाराहता
करीन्द्रकरटक्षरन्मदमहोर्मिरुद्धा सिता ॥
रणव्रतससैनिकक्षतजसिक्तमूलाचल-
द्रजोजवनिका शनैरपससार सेनामुखात् ॥ ८ ॥

आभूमण्डलमापयोधिवलयादाचक्रवालाचला-
दा तारापथमापुरन्दरपथादा पद्मसद्मालयात् ॥
आब्रह्माण्डकटाहकर्परपुटं तूर्णं जुघूर्णे
भयाद्भ्राम्यद्दिक्करिकर्णभूमिवलयं भेरीरवैर्भैरवैः ॥ ९ ॥

आसरोजेति ॥ सत्यलोकपर्यन्तं नूनमुत्प्रेक्षायाम् । अहितभयं यथास्यात् । विराट् विश्वरूपो नारायणः ॥ ६ ॥

उद्गाढेति । उद्गटं दुर्दिनमेव छन्नमहस्तेन विसंस्थूला अन्यथाभूता वृत्तिर्यस्य 'आरात् दूरसमीपयोः'। मलनं मालिन्यमदर्शनं च ! वयनान्तेति वस्त्रान्तसक्तो वृत्ता चलश्च। रागी कामी 'तिलकं चित्रके प्राहुर्ललाकालकेरोगाश्च द्रुभेदेषु काम्नि सौवर्चलेपि चे'ति विश्वः ॥ ७ ॥

अकालेति । ऊर्मिभिः निरुद्धा । सितेति पाठे ऊर्म्यन्तो बहुव्रीहिः । उद्वासो निरासः । 'करटः कटकाकयोरिति' विश्वः ॥ 'प्रतिसीरा जवनिके'त्यमरः ॥ ८ ॥

आभूमण्डलेति । 'लोकालोकश्चक्रवाल' इत्यमरः ॥ कर्परं

दिव्यास्त्रग्रामशिक्षानिकषमरिकुलारब्धवैराग्निहोमं
स्त्रयोंषाकर्षदिव्यौषधममरपुरीवर्त्मसोपानखण्डम् ॥
कीर्त्तिः क्षीराब्धिमूलस्थलमखिलजगच्छल्यनिर्हारयत्नं
प्राणद्यूतं व्यदीव्यन्नृपकुलमहसां मण्डनं शौर्यशौण्डाः १०
पुरोबलानां विजयध्वजश्रियं समादधानेन भृशं हनूमता ॥
प्रवेशिता श्रोत्रपथेन विद्विषां मनस्सु भीतिर्नदतातिभैरवम् ११
नलोद्धता नीलगजाभिरामा तीव्राच्छभल्ला शरभारभीमा ॥
महोदयारम्भपरागभीरता तारप्रणादा कुमुदानुबद्धा ॥१२॥

कपालं जुघूर्णे भ्रान्तम् ॥ 'घुणघूर्णभ्रमणे' क्वचिदव्ययीभावः ॥ क्वचिदाङ्योगे पञ्चमी ॥ ९ ॥

दिव्येति । 'घसं ग्रामः स्वरे संस्थे वृन्दशब्दादिपूर्वके' इति विश्वः ॥ निकषाः परीक्षास्थानं वैरिवर्गाल्लब्धवैराग्निसम्बन्धीहोमरूपम् । शल्येति । जगच्छल्यभूतयो रावणदुर्योधनयोर्निराकरणात् । दुरुद्धरं हि शल्यं यत्नेण निष्क्रियते । प्राणद्यूतं सङ्ग्रामम् । 'दिवः कर्मचे'ति साधकतमस्य कर्मत्वम् ॥ 'शौण्डो मन्त्रेपि च ख्यात' इति विश्वः ॥ १० ॥

पुरइति । सैन्याग्रजो जयध्वजायमानेनातिभीषणं यथा स्यात्तथा शब्दं कुर्वाणेन मारुतिना रक्षसां मनस्सु कर्णमार्गेण भीतिः प्रवेशिता ॥ पक्षे अर्जुनः ध्वजेन तेन बलानां पुरो नदतां दुर्योधनादीनाम् ॥ ११ ॥

नलेति । युग्मम् ॥ महीपतेः रामस्य युधिष्ठिरस्य च सेना ननाद शब्दं चकार । नलेन विश्वकर्मात्मजवानरेणोद्धता ॥ नीलोग्निसुतो गजश्च वानरस्तलपोटगलस्तद्वदुद्धतैरानीलैः गजैश्चाभिरामा तीव्रा अच्छा भल्ला ऋक्षा जाम्बवदादयः तीक्ष्णाः अच्छाः भल्लाः शस्त्रविशेषाश्च तद्वती ॥ 'भल्लो भल्ले च बाणे

उदीर्णतालार्जुनकृष्णसारप्रौढायुधा मन्युबलोद्धता च ॥
महीपतेः सल्लसदुत्तमौजाः सेना शतानीकमुखा ननाद॥१३॥
युग्मम् ॥

आकम्पनोद्दीपितमेघनादप्रहस्तनाथा दृढचित्रकाया ॥
आविर्भवद्वैरिनरान्तकोग्रा समार्षवेगोज्वललोहिताक्षा॥१४॥

स्यादि'ति शब्दभेदः ॥ शरभस्य कपिविशेषस्यारेण गमनेन शराणां भारैश्च भीमा । शरभोष्टचरणः सिंहघाती स इव आरे वैरिसंमूहे भीमसेनो यत्रेति ॥ महोदयामहानुदयोस्यारम्भो वा नरविशेषश्रेष्ठोस्यां महोदयस्याधिपत्यस्यारम्भे परा च ॥ ताराख्यवानरकृतगम्भीरशब्दवती गम्भीरात्युच्चनादवती च ॥ कुमुदाख्येन कपिना कौ पृथिव्यां मुदा प्रीत्यानुसम्बद्धा ॥ १२ ॥

उदीर्णेति । उद्यततालादिवृक्षमहायुधा क्रोधबलोर्जिता परस्परहस्ततालार्जुनकृष्णरूपसारेण प्रौढा युधामन्युसंज्ञकपाञ्चाल्यशक्तिसंपन्ना च ॥ सल्लसदुत्तममोजस्तेजो यस्याः सा सल्लसदुत्तमौजाः संज्ञकपाञ्चाल्या च। शतानीकनामा कपिः शतानीको नाकुलिश्च मुखं प्रधानमस्याम् ॥ 'बलः पोटगलेरातिपितृदेवे कपीश्वरे'इतिविश्वः ॥ 'नीलः कृष्णे नगान्तरे नीलः कपीश्वरे॥ महोदयः कन्याकुब्ज्याधिपत्याय (?) योगवित् ॥ 'कुमुदं कैरवे रक्तपङ्कजे कुमुदः कपौ ॥ दैत्यान्तरेपि दिङ्नागनागयोरपि कीर्तितः ॥ कुमुदः कृपणेन्यवदि'ति च ॥ १३ ॥

आकम्पनेति । युग्मम् । सा रावणस्य सुयोधनस्य च सेना रामादीन् युधिष्ठिरादींश्च रुरोध । अकम्पनेन राक्षसविशेषेणोद्दीपितरावणपुत्रा निर्भयोद्दीप्तमेघतुल्यशब्दा च । प्रहस्ताख्यो राक्षसः प्रकृष्टहस्ताश्च नाथा अस्या दृढचित्रकायो राक्षसश्चित्रदेहाश्च यस्माद्दृढं चित्रकरमाश्चर्यरूपमयते गच्छतीति वा ॥

ससिन्धुराजा तरसोग्रभीष्मा सहेतिशल्याकृतवर्मनिष्ठा ॥
समिन्महाकर्मसुदक्षिणा च रुरोध शत्रून् परवाहिनी सा १९
युग्मम् ॥

द्रुतमधरितवज्रमुष्टिपात-
स्फुरदशनिप्रभहेतिदुर्निरीक्ष्यम् ॥
रणभुवि विदधे महाभुजाभ्या-
मरिकुलमर्दनमाश्विनन्दनाभ्याम् ॥ १६ ॥

रथान्रथैर्वाजिभिरर्वतोग्रान्निभानिभैः पत्तिभिरेव पत्तीन् ॥
समीरसूनुः समरे परेषां बलानि वीरः प्रसभं बभञ्ज ॥१७॥

व्यूहप्रतिव्यूहविधानदक्षः
सेनापतिः पावकलब्धजन्मा ॥

सा च आविर्भवद्वैरेण नरान्तकेन रावणिना आविर्भवद्भिः वैरे-णान्तककल्पैश्च उवासामर्षवेगोज्ज्वलो लोहिताक्षो रक्षोविशेषः क्रोधवेगोद्दीप्तरक्तनेत्राश्च यस्याः ॥ १८ ॥

स इति । सिन्धुरैः गजैः सिन्धुराजेन जयद्रथेन च सहिता-जातयुद्धा वेशो ग्रामभयङ्करः तेजसोग्रः शान्तनवा च । सहेति शल्यासायुधशक्तिकाख्यशस्त्रा समद्रेशा च ॥ कृता वर्मणि क-वचे कृतवर्माख्ययोधे च निष्ठा यया सा ॥ संग्रामे महाकर्मसु कुशला समिदेव मह उत्सवोस्या इति वा । महाकर्मसु दक्षिणः काम्बोजोस्यां सा च ॥ १९ ॥

द्रुतमिति ॥ वज्रमुष्टिर्यातुभेदो वज्रतुल्यमुष्टिश्च अशनिप्र-भो वज्रनाभनामा ॥ हेतिः रक्षोभेद इति कश्चित् ॥ तदायुधेन ताभ्यां वा ॥ स्फुरद्वज्रकल्पैरायुधैश्च दुर्दर्शम् ॥ अश्विपुत्रौ मै-न्दद्विविदवानरौ नकुलसहदेवौ च ॥ १६ ॥

रथानिति । समीरसूनुर्हनुमान् भीमश्च ॥ १७ ॥

नरेन्द्रसैन्यानि जुगोप नीलः
शिखण्डिसैन्यानि यथाम्बुवाहः ॥ १८ ॥
व्याधूतनानाविधयोधभीमां
मदान्धमातङ्गघटापटिष्ठाम् ॥
पलाशिभिर्द्रागिवशिखैर्बबाधे
सहस्रगोः सूनुररातिसेनाम् ॥ १९ ॥
विभीषणो दर्शितभर्तृभक्तिर्युद्धे हिडिम्बाकुलभूः प्रसर्पन् ॥
क्षपाचरेन्द्रः क्षपयाम्बभूव नैकान्यनीकानि निशाचराणां२०

व्यूहेति । व्यूहस्तु बलविन्यासः पावकपुत्रो नीलो धृष्टद्युम्न श्च ॥ नरेन्द्रस्य रामस्य युधिष्ठिरस्य च ॥ नीलो मेघश्च मयूरवृन्दानि च ॥ शिखण्डी ना मयूरे स्याद्गाङ्गेयस्य रिपावपी'ति मेदिनी ॥ १८ ॥

व्याधूतेति । पटिष्ठां समर्थां सहस्ररश्मेः सहस्राक्षस्य च सूनुः सुग्रीवोर्जुनश्च शिखाशून्यैर्वृक्षैः सपक्षकैः बाणैश्च अरातिः रावणो दुर्योधनश्च । ' पलाशो वृक्षरक्षसोः ॥ गौः स्वर्गे वृषभे रश्मौ वज्रे चन्द्रमसि स्मृतः ॥ श्रवणे नेत्रदिग्बाणे भूवारिषु च गौर्मतेति'विश्वः ॥ १९ ॥

विभीषणेति ॥ रावणभ्राता दर्शितरामभक्तिः हि स्फुटं डिम्बेन भयध्वनिना विप्लवेन वा आकुलो भूर्लोको येन । 'डिम्बो भयध्वनौ रन्ध्रे पुल्कसे छीहाविप्लवे ' इति मेदिनी ' डिम्बो डम्बरविप्लवावि'त्यमरः । पक्षे विशेषेण भयङ्करः । दर्शितयुधिष्ठिरभक्तिः हिडिम्बापुत्रो घटोत्कचः नैकान्यनेकानि । निषधार्थकनकारेण नैकधेत्यादिवत्समासः ॥ निशाचराणां दुर्योधनसहाये रक्षसाम् ॥ २० ॥

परिस्फुरत्कार्मुकमण्डनोथ नृपात्मजो वानरवीरलक्ष्मा ॥
तताप विद्वेषिबलं पृषत्कैर्लोकं मयूखैरिव चण्डभानुः ॥२१॥

लूनस्यन्दनकेतुपत्तितुरगच्छत्राक्षधूर्बन्धुराः
सैन्यस्त्रीकुचकुम्भिमौक्तिकबहिःकारस्फुरत्साहसाः ॥
वीरोरःस्थलदारुणारुणमुखाः सैन्येषु देवद्विषां
प्राणोन्मोषणनिर्विकारचरिताश्चेरुस्तदीयाः शराः २२

निपातयन्तो ध्वजकाननानि
विदारितोत्तुङ्गकरीन्द्रशैलाः ॥
महेन्द्रमुक्ताशनिसन्निकाशा
न सेहिरे तस्य शरा विपक्षैः ॥ २३ ॥

चरंस्तथाजौ रघुराजसूनुर्विपाटितारातिचमूर्विपाटैः ॥
गाण्डीवमुच्छ्रायि धनुर्विधुन्वन्साक्षान्नरो देव इवाबभासे २४

परीति । नृपात्मजो रामो जिष्णुश्च । वानरवीराः सुग्रीवाद्-यो हनुमांश्च । पृथक् षट् अस्य पृषत्को बाणः पृषोदरादिः ॥ 'पुंखः शल्यस्तथा शत्यपिशिस्नायुजतूनि षडि'ति धनुर्वेद इत्यमरकोशात् ॥ २१ ॥

लूनेति । 'ऋक्पूरब्धूः पथामानक्षे' इत्यत्र अनक्षे धूरिति अनक्ष इति निषेधान्न समासान्तः । तदीयाः रामार्जुनीयाः 'वन्धूरबन्धुरौ रम्ये नम्रे हिंस्रे च वन्धने' इति विश्वः । 'देवः सुरे धने राज्ञी'ति च ॥ २२ ॥

निपातेति । तस्य रामस्यार्जुनस्य च ॥ २३ ॥

चरन्निति । रघुराजसूनुः रामः लघु यथा स्यात्तथा राजपुत्रोर्जुनश्च ॥ 'विपाटश्चाशुगः शरः । गाण्डीवमिवोच्छ्राय युक्तं गाण्डीवस्य मुदमवश्यं श्रयते वा तन्नामकमुच्छ्राययुक्तं च धनुः नारायणापरमूर्तिरिव साक्षान्न तु तदवतार इति च । दीव्यति

अथ रणभुवि भीष्मः प्रोच्चलन्मेघनादः
स्फुरदविरलरोषारोपदुर्दर्शचापः ॥
द्विषदयुतनिपाते नित्यबद्धप्रतिज्ञः
स्फुटमलभत दोष्णोर्विक्रमस्यावकाशम् ॥ २५ ॥

रोमाञ्चिता इव भुवो गिरयः प्ररोह-
त्पक्षाइवाभ्रपटलैर्जटिला इवाशाः ॥
अन्तःशकुन्तिभिरिवाञ्चितमन्तरिक्षं
तद्बाणसन्ततितिरस्करणादभूवन् ॥ २६ ॥

सुरेन्द्रसन्तानभुवाभिमन्युना
महारथो भग्नमनोरथः कृतः ॥
परैर्दुरीक्ष्यः स बभूव तेजसा
रविर्यथा मध्यमधिष्ठितो दिवः ॥ २७ ॥

जिगीषति क्रीडति वा देवः । 'गाण्डीवगाण्डिवौ जिष्णोः कोदण्डे कार्मुकेपि चेति' विश्वः ॥ २४ ॥

अथेति । भीष्मो भयङ्करः शान्तनवश्च मेघनाद इन्द्राजिच्छ-ब्दश्च द्विषतामयुतस्य निपाते अयुतसंख्यवैरिपाते च ॥ २५ ॥

रोमाञ्चितेति । भुवो भयेन संजातहर्षा इव गिरयः पलायना-योद्यतपक्षा इव दिशः शरघातवारणाय परिहितकञ्चुका इव नभो निरोधकमांसभक्षणाय संगृहीतपक्षिगण इव तस्य भीष्मस्य च बाणधाराभिराच्छादनादासन् ॥ २६ ॥

सुरेन्द्रेति । वालिपुत्रेणाङ्गदेनार्जुनपुत्रेण च । अभिमन्युना अ-तिक्रोधेनैतन्नाम्ना च । भग्नमनोरथः हतोत्साहः स इंद्रजित् दि-वो मध्यं प्राप्यावस्थितोन्तरिक्षगो वैरिभिरदृश्योभूत् । तेजसा रविरिव । पक्षे भीष्मस्तेजसा परैर्दुर्निरीक्षणोभूत् । नभोमध्यगोर्क इव । 'कृतं युगेलमित्यर्थे विहितेविहितेत्रिष्विति' विश्वः ।

तेन द्विषां दुष्करदर्शनेन मुक्तः शराशीविषराशिरुग्रः ॥
क्षपामुखे ध्वान्तवदन्तरिक्षं निरन्तरालं न चिराच्चकार २८॥
तथाशान्तनवोद्योगे मेघनादे यथाध्वगाः ॥
अवापुः प्राणसन्देहमुदारा वानरेश्वराः ॥ २९ ॥
अस्त्रैरनालीढवपुः परेषां धृतायुधो यावदमित्रमेकः ॥
मनोरथं वैरिबलस्य भङ्क्त्वा श्वेतं यशःपुञ्जमसौ बबन्ध ३०

'एक एव हि यः शत्रून् साहङ्कारं व्रजत्यलम् ॥ महारथः स विज्ञेयो युद्धशास्त्रविशारदैः ॥ १ ॥ एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् ॥ शस्त्रशास्त्रप्रवीणः स महारथ इति स्मृतः ॥ २ ॥ २७ ॥

तेनेति । इन्द्रजिता भीष्मेण च । मायावित्वाददृश्येन तेजस्वित्वात् दुःप्रेक्षेण च । द्विषां द्विषेति वा पाठः । शरेति बाणायितसर्पाणां सर्पायितबाणानां च राशिः । क्षपामुखे मुक्तः । प्रदोषे ध्वान्तवच्च ॥ २८ ॥

तथेति । अशान्तनूतनोद्योगे मेघनादे इन्द्रजिति सति वानरेश्वराः आशान्तेषु दिगन्तेषु नवोद्योगेब्दध्वनौ पथिका इव प्राणसन्देहमवापुः । पक्षे मेघतुल्यनादवति भीष्मोद्योगे शब्दनादेश्च गा इव वा पादपूरणे नरेश्वराः राजानः उद्गत आरावो येषां ते इति वा । उ सम्बोधने स्वरप्रतिरूपकमव्ययम् । दारा वा स्त्रिय इवेति वा । 'वा स्याद्विकल्पोपमयोरि'त्यमरः । प्रयुज्यते च 'आशीविषो वा संक्रुद्धः सूर्यो वा भूमिनिर्गतः ॥ भीमोन्तको वा समरे गदापाणिरदृश्यते'ति ॥ २९ ॥

अस्त्रैरिति । असौ मेघनादो भीष्मश्च परेषामस्त्रैरदृष्टशरीरः अलक्ष्यत्वेनालक्ष्यत्वात् छद्माच्च । यावन्तो मित्रास्तावन्त्यायुधानीति यावदमित्रम् । 'यावदवधारण'इत्यव्ययीभावः । वै-

नरनारायणौ साक्षादिव तौ रामलक्ष्मणौ ॥
सचक्रौ स तिरश्चक्रे नागरूपचरैः शरैः ॥ ३१ ॥

दुर्निवारमपरैर्धरणीश-
स्तस्य वीर्यमवलोक्य सरोषः ॥
नागबद्ध इव मन्दरशैल-
स्थैर्यमात्मगतमुत्सृजति स्म ॥ ३२ ॥

रिसैन्यस्य तद्रूपरूपस्य श्वेतस्येति च मनोरथं विजिगीषोर्मनोवेगरथं च भङ्क्त्वा प्रतिहत्य आमृद्य च । तस्यैव श्वेतं शुक्लं यशोराशिः ओघः तद्वन्तं श्वेतनामानं विराटज्येष्ठपुत्रं च बभञ्ज भग्नवान् बबन्धेति स्वयशसा अवमृद्नात् । विराटपुत्रं मरणान्तव्यापारेण प्रतिबद्धं चकारेति चार्थः । विराटपुत्र यश श्वेति कश्चित् ॥ ३० ॥

नरेति । स मेघनादो भीष्मश्च साक्षात्प्रत्यक्षौ नरनारायणाविव तौ प्रसिद्धमहिमानौ रामलक्ष्मणौ रामलक्ष्मणाविव तौ नरनारायणौ अर्जुनवासुदेवौ च सचक्रौ ससैन्यौ ससुदर्शनौ च सर्वरूपैस्तत्सदृशैश्च शरैस्तिरश्चक्रे परिबभूव । आच्छादयामास च । 'साक्षात्प्रत्यक्षतुल्ययोरि'त्यमरः । 'चक्रो गणे चक्रवाके चक्रं सैन्यरथाङ्गयोः । ग्रामजाले कुलालस्य भाण्डे राष्ट्रास्त्रयोरपीति'विश्वः ॥ ३१ ॥

दुर्निवारेति । धरणीशो रामः कृष्णश्च तस्येन्द्रजितो भीष्मस्य च सर्पैर्बद्धो मन्दर इव आत्मनि स्थैर्यं तत्याज बभ्राम मुमोह सारथ्यं त्यक्त्वा युयुत्सता भीष्ममभिजगाम । वासुकिवेष्टनो मन्दरइवेति च वा । 'नागः पन्नगमातङ्गक्रराचारिषु तोयदे' इति विश्वः ॥ ३२ ॥

जिघांसया तस्य शरार्दितानि
बलानि भग्नानि निरीक्ष्यमाणः ॥
मनुष्यमूर्त्तिः पुरुषः पुराणो
महीतलं मन्युवशाज्जगाम ॥ ३३ ॥

सपदि भुवननाथे तां दशां संप्रपन्ने
भ्रमति च हरिचक्रे लोलहेतिप्रताने ॥
सुरमुनिभिरवादि स्वस्ति लोकत्रयाय
त्युदजनि परसैन्ये मङ्क्षु कोलाहलश्च ॥ ३४ ॥

निरीक्ष्य रामानुजमाकुलं तथा
तदा विसंज्ञे भुवनत्रये भृशम् ॥
प्रभाववेदी भुवनप्रभोः परं
मुमोच नो तां प्रकृतिं पितामहः ॥ ३५ ॥

जिघांसयेति । तस्य मेघनादस्य कर्त्तुः जिघांसया करणभूतया शरैः पीडितानि सैन्यानि भग्नानि पश्यन् पुराणपुरुषो नारायणो मनुष्यमूर्त्तिः रामरूपापन्नो मन्युवशात् दैन्याधीनतया महीतलं जगाम । भूमौ पपात । पक्षे सैन्यानि भग्नानि पश्यन् कृष्णो भीष्महननेच्छया क्रोधावेशेन रथादवततार । 'मन्युर्दैन्ये क्रतौ क्रुधी' त्यमरः ॥ ३३ ॥

सपदीति । भुवननाथे रामे कृष्णे च तां दशां नागपाशवशान्मोहे वशं युयुत्सतां च । हरिचक्रे कपिकुले कृष्णसुदर्शने च ॥ हेतयः शस्त्राणि ज्वालाश्च ॥ 'रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतय' इत्यमरः । 'द्राङ्मंक्षु सपदि द्रुत' इति च ॥ ३४ ॥

निरीक्ष्येति । रामसहितमनुजम् ।'सर्वोऽपि द्वन्द्वो विभाषयैकवदि'त्येकवद्भावो वा । रामं लक्ष्मणं च । पक्षे कृष्णं च भुवन-

अवान्न वायुर्निरवात्कृशानुः
क्षितिश्चकम्पे जलधिर्जुघूर्णे ॥
आसीन्महोल्काजटिलं नभश्च
किं वा तदा भ्रान्तमभून्न भूतम् ॥ ३६ ॥

अथ भुवमवतीर्णः पन्नगारिः किरीटी
सपदि शमितमन्युः प्रीतिहृद्यैर्वचोभिः ॥
तमवजितभुजङ्गप्राभवाभ्यां भुजाभ्या-
मशिथिलमुपगुह्य स्वामवस्थामनैषीत् ॥ ३७ ॥

दीप्तं यशः संयति लब्धवन्तं गाङ्गेयमुच्चैर्गतमात्मधाम्ना ॥
तृणीकृताखण्डलशत्रुमेनं राजा स्ववर्गैः सह बह्वमंस्त॥३८॥

प्रभोर्नारायणस्य पितामहो ब्रह्मा जाम्बवान् भीष्मश्च नोद्विग्नोभूत् । 'पितामहो विरिञ्च्ये स्यात्तातस्य जनकेपि च' इति विश्वः ॥ ३९ ॥

अवान्न वायुरिति स्पष्टार्थः ॥ ३६ ॥

अथेति । पन्नगारिर्गरुडः खाण्डवदाहे हतसर्पोर्जुनश्च । पन्नगोश्वसेनो रिपुर्यस्यार्जुनस्येति वा किरीटी मुकुटवान् तन्नामा च । मन्युर्दैन्यं क्रोधश्च । तं रामं कृष्णं च । अवेति प्रभोर्भवः प्राभवं जितसर्वसामर्थ्याभ्यां निर्ग्रन्थितया तत्साहश्याभ्यां च । स्वामवस्थां रूपबाधाशून्यतां युयुत्साराहित्यं च ॥ ३७ ॥

दीप्तमिति । राजा रावणः उच्चैर्गेयं यशः सङ्ग्रामे आत्मतेजसा प्राप्तं गां स्वर्गं गतः रामबन्धनार्थं ततः पृथ्व्यागतं वा तेजसा सुवर्णसादृश्यं तदेव प्राप्तं नमस्कारेण भूमिगतं वा तृणीकृत इन्द्र एव शत्रुर्येन तमेनं शक्रातीतं बह्वमन्यतेपि । पक्षे राजा दुर्योधनः एनं गाङ्गेयं गङ्गासुतं भीष्मं तेजसोच्चैस्त्वं प्राप्तं। आखण्डलशत्रवो दैत्या इन्द्रात्मजत्वादाखण्डलोर्जुनः स एव श-

तदा पुनः स्वां प्रकृतिं प्रपन्नौ निरीक्ष्य हृष्टौ नरदेववर्यौ ॥
बलाधिनाथाः प्रसभं बभञ्जुः प्रचण्डवेगाः परमण्डलं ते ३९
आक्रान्तमन्तर्हरिनायकेन तेषां प्रतापेन कृशानुनैव ॥
पुरत्रयं लुष्टमिवेश्वरेण विरोधिचक्रं चकितं चचाल ॥ ४० ॥
रोषेण धूम्राक्षमकम्पनं च प्रमथ्य सैन्यं पवमानसूनुः ॥
व्ययूयुजत्संयति जीवितेन तुङ्गेन दोष्णा तुलिताद्रिशृङ्गः ४१

त्रुः खाण्डवदाहे जितेन्द्रत्वाद्वा इन्द्रशत्रुरर्जुनस्तृणीकृतो येन तं। यद्वा राजा रामः दीप्तं यशः अतितप्तकार्तस्वरभास्वरत्वादात्मधाम्ना गाङ्गेयं सुवर्णं तद्भावं प्राप्तं गां स्वर्गतं चोच्चैः स्तुत्यं वा तृणीकृतेन्द्रजितमेनं गरुडं स्ववर्ग्यैः सुग्रीवादिभिः। 'गाङ्गेयं भर्म कर्बुरमि' त्यमरः। पक्षेपि राजा युधिष्ठिरः स्वशौर्येण भीष्म मतं तृणीकृतदैत्यमेनं कृष्णमर्जुनं वेति ॥ ३८ ॥

तदेति। स्वां प्रकृतिं प्रपन्नौ गतपाशौ रामलक्ष्मणौ।पक्षे नरो विष्णुर्देववर्यः कृष्णस्तस्य स्वां प्रकृतिरापादि कृष्णस्य सारथ्यं जिष्णोर्युद्धाभिनिवेशम्। बलाधिनाथाः सुग्रीवादयो भीमादयश्च। परो रावणो दुर्योधनश्च ॥ ३९ ॥

आक्रान्तेति। वानरनायकेन सुग्रीवादीनां तेषां वानराणां प्रतापेन लु। दग्धं विरोधनां रक्षसां चक्रं सैन्यं 'हरिनायकाना'-मित्यपि पाठः सुगमः। पक्षे कृष्णसारथिनार्जुनेनांतराक्रान्तं तेषां पाण्डवानां प्रतापेन लुष्टं कौरवसैन्यं ऐश्वरेण शराग्निना लुष्टं त्रिपुरमिव रणाच्चहाल ॥ ४० ॥

रोषेणेति। पवमानस्य वायोः सूनुः हनुमान्क्रोधेन सैन्यं हत्वा प्रांशुना हस्तेनोत्थापितगिरिशिखरोथ धूम्राक्षकम्पनौ राक्षसौ निर्जीवीचकार। पक्षे अद्रिशिखरसदृशभुजो भीमसेनः क्रोधेन धूम्रनयनं अकम्पनं निर्भयं च सैन्यं प्रमथ्य जघान ४१

ततो निषङ्गी शरदी प्रहस्तः
सेनापतिः क्रौञ्चमिवापगेयः ॥
बलं बृहच्छक्तिधरो बिभेद
मूर्च्छद्यशः पाण्डुसुतस्य राज्ञः ॥ ४२ ॥
प्रवीरलोकान्प्रलयं नयन्तं
प्रतापकालानलमस्य दृष्ट्वा ॥
यशोधनस्तं निधनैकसाध्यां
स्वपक्षरक्षां क्षितिपोनुमेने ॥ ४३ ॥
विक्रान्ता अपि धीमन्तस्ते पार्था हरिनायकाः ॥
नक्तंचारिबलाधीशमभिपेतुर्जयश्रियः ॥ ४४ ॥

ततइति । निषङ्गी इषुधीमान् । शरान्ददात्युत्सृजतीति शरदं धनुस्तद्वान् प्रहस्तनामा सेनापतिः आपगायाः गङ्गायाः अपत्यं गुहः बृहत्याः शक्तेरायुधविशेषस्य धरः क्रौञ्चपर्वतं राज्ञः सुतस्य रामस्य मूर्च्छता यशसा पाण्डुशुक्लीभूतं महद्बलं विभेद । सुःपूजायामव्ययम् । अतिशयेन तस्य राज्ञ इति वा । उपसर्गत्वे 'ते प्राग्धातो' रित्यस्य प्रयोगनियमार्थत्वे सता नियमार्थत्वे वा धातोः प्रागेव प्रयोगः स्यात् । 'कासूसामर्थ्ययोः शक्तिरि'त्यमरः । उपमालङ्कारः । पक्षे शरैः दीप्तभुजः कौरवसेनानीर्गाङ्गेयो भीष्मः क्रौञ्चं कृष्णयुद्धोद्यमात्प्राक् युधिष्ठिरकृतं क्रौञ्चाकारव्यूहविशेषमिव ततः अर्जुनेन कृष्णस्य परावर्तनानन्तरं महाशक्तिसंपन्नः पाण्डुसुतस्य राज्ञो युधिष्ठिरस्य विवृद्धयशस्कं सैन्यं मूर्छद्यशो यथा स्यात्तथा वा अभैत्सीत् । 'क्रौञ्चः खगनगद्वीपप्रभेदेषु प्रयुज्यत' इति विश्वः । उपमाध्वनिः ॥ ४२ ॥

प्रवीरेति । अस्य प्रहस्तस्य भीष्मस्य च तयोः । प्रहस्तभीष्मयोः । निधनं नाशः । क्षितिपो रामो युधिष्ठिरश्च ॥ ४३ ॥

विक्रान्ता इति । धीमन्तो बुद्धिसम्पन्नाः कृतविक्रमाः अ-

निर्भिन्नमर्मणा देहस्पृहां हित्वा युयुत्सता ॥
परेभ्यस्तेन वीरेण वधोपायः प्रदर्शितः ॥ ४९ ॥
प्रवर्त्य भूयः समरं परश्शता-
न्विपक्षवीरान्नयतो यमक्षयम् ॥
पराक्रमस्तस्य धनञ्जयोद्भव-
प्रतापरुद्धोपि विपप्रथेतराम् ॥ ४६ ॥

पार्थाः असिद्धप्रयोजनाः जिगीषवस्ते कपियूथपाः नक्तंचारिणां रक्षसां बलस्याधीशं हस्तमभिपेतुः । पक्षे पराक्रमिणो बुद्धिमन्तश्च प्रसिद्धमहिमानः कृष्णोपदेष्टृका युधिष्ठिरजयार्थिनः सन्तो वैरिसेनापतिं भीष्मं तद्वधोपायजिज्ञासयाभ्याजग्मुः॥ ४४॥

निर्भिन्नेति । निर्भिन्नानि मर्माणि येन शरीरास्थां विहाय युद्धकामेन तेन वीरेण प्रहस्तेन वानरेभ्यः वधरूपः अपायः प्रदर्शितः बहवो हता इत्यर्थः । देहस्पृहां त्यक्त्वा युध्यमानेनैव शत्रवो हन्तुं शक्या इति स्वनिदर्शनेन प्रदर्शितमिति वार्थः । पक्षे निर्भिन्नमुद्भिन्नं प्रकाशितं मर्म रहस्यं येन देहजिघांसया युयुत्सुना तेन भीष्मेण स्ववधस्योपायः 'शिखण्डिनं पुरस्कृत्यार्जुनेनाहं हन्तव्य' इत्येवं रूपः पाण्डवेभ्यः उक्तः । परे परमात्मनि अभ्यस्ते निरन्तरपरिशीलनेन साक्षात्कृते वधोपायो न प्रदर्शितः । अपि तु प्रदर्शित एवेति वा । तदुक्तं 'आत्मप्रेम्णि समुत्पन्ने विषयप्रेम नश्यति । योषित्प्रेम्णि समुत्पन्ने मातृप्रेमेव कामिनामि'ति । यद्वा । परात्मनि साक्षात्कृते दर्शितः अपायो न वधः प्रदर्शितो वधो वा नापायः देहादितादात्म्याध्यासस्यैवात्मवधाद्यभिमानमूलत्वात्तद्विविक्तात्मदृष्टेस्तस्य तदभावात्। 'पूर्वादिभ्यो नवभ्य' इति वैकल्पिकत्वात्स्मिन्नभावः ॥ ४९ ॥

प्रवर्त्येति । तस्य प्रहस्तस्य भीष्मस्य च । धनंजयोद्भवो व-

प्रतिदिशमरिवीरानाशु विद्रावयित्वा
समरभुवि चरन्तं नायकं वाहिनीनाम् ॥
प्रसभमभिपपात प्रांशुधामाग्निजन्मा
फणिपतिमिव तीव्रं चण्डवेगः शिखण्डी ॥ ४७ ॥

असह्यतेजाः प्रहरन् प्रहस्तं
मनोजवः स्यन्दनजीर्णभूमिः ॥
असौ विसर्पन् समरे समन्ता-
न्न तच्छराणामभवच्छरव्यम् ॥ ४८ ॥

द्विजो नीलस्तदीयेनार्जुनेन च । प्रतापेन रुद्धः विपप्रथेतरां अत्यन्तं ववृधे । शतात्परे परश्शताः । 'पञ्चमी'ति योगविभागात्समासः । राजदन्तादित्वाच्छतस्य परनिपातः पारस्करादित्वात्सुट् तस्य भक्तत्वान्न विसर्गः । 'परश्शताद्यास्ते येषां परा संख्या शतात्परे' इत्यमरः ॥ ४६ ॥

प्रतीति । दिशि दिशि प्रतिदिशं शरदादित्वाट्टच् । विद्रावयित्वा विद्रुतान् विधाय विरुद्धो द्रावो विद्रावो विद्रावन्तं करोतीति ण्यतात्क्त्वा अन्यथा समासे ल्यप्प्रसङ्गात् । आशु विध्यतीत्याशुवित् वेत्तीति वा । द्रावयित्वा आहूय प्रापय्येति वा । प्रांशुधामा तेजस्वी अग्निजन्मा नीलः सर्पं मयूर इव सेनापतिं प्रहस्तमभिससार । पक्षे उच्चस्य तेजोग्नेर्जन्म यस्मात् । प्रांशुधामा वह्निजन्मा भ्राता धृष्टद्युम्नो यस्येति वा स शिखण्डी द्रुपदपुत्रः सर्पमिव भीष्ममभ्यापपात ॥ ४७ ॥

असह्येति । मनो जवति प्रविशति । जुइति सौत्राद्धातोरच् मनोजवः पितृतुल्यो नीलः 'मनोजवः पितृनिभ' इति क्षीरस्वामी । पाठं पपाठ इत्याहुः । स्यन्दनं गतिः तस्य प्रहस्तस्य शराणां शरव्यं लक्ष्यं न बभूव । पक्षे असौ शिखण्डी मनोजवेन रथेन

संख्ये सन्मुखतां सता रचयता रामानुजस्य प्रियं
सद्यःसन्मदहृष्टरोमविलसद्वक्षःशिलां बिभ्रता ॥
अग्रे धाम शिखण्डिनः प्रथयता भ्राजिष्णुना विष्णुना
नीलेनाम्बुमुचेव दावदहनः सेनापतिःपातितः ॥ ४९ ॥

रणाङ्गणगतः प्राणांस्तावदेव बभार सः ॥
यावत्तीव्रकरो नासीदाग्नेयपथगोचरः ॥ ५० ॥

एवं दशाहानि धृतप्रतिज्ञः कपिध्वजेनाहितयुद्धभीष्मः ॥
पतत्रिभिस्तीक्ष्णमुखैः परीतः सवीरशय्यां चिरमध्यशेत ५१

दीर्णा भूमिर्येन तस्य भीष्मस्य द्रुपदस्य हि शिखण्डिनी कन्येयं न पुमान् शिखण्डीति । भीष्मस्य स्त्रियं स्त्रीपूर्वत्वान्न प्रहर्त्तव्यमिति प्रतिज्ञा ॥ ४८ ॥

संख्येइति । संग्रामसांमुख्यं प्रसन्नास्यतां रचयता प्राप्नुवता तारान्वयस्याङ्गदस्य प्रियं कुर्वता 'रामानुजस्ये'ति पाठे रामसहितस्य लक्ष्मणस्य सद्य इत्यादि वक्ष इत्यन्तं यथाख्यात् शिलां दधानेन भ्राजिष्णुना दीप्यमानेन जिष्णुना जयशीलेन मयूरस्याग्रे प्रभावं दर्शयता मेघेन दावाग्निरिव प्रहस्तः पातितः पक्षे संग्रामे भीष्माभिमुखं भजता । उच्चान्वयस्य युधिष्ठिरस्य पाठान्तरे बलरामानुजस्य कृष्णस्य द्रौपद्यनुजस्य शिखण्डिनो वा प्रियं रचयता हर्षोत्पुलकवक्षसा स्वस्याग्रे शिखण्डिनः श्यालस्य तेजो दर्शयता दीप्यमानेन जिष्णुनार्जुनेन नीलमेघेन दाव इव भीष्मः पातितः ॥ ४९ ॥

रणाङ्गणेति । स तीव्रकरोन्वर्थनामा प्रहस्तः यावदग्नियस्याग्निपुत्रस्य नीलस्य मार्गगो नासीत् । तावदेव जीवितवान् ॥ पक्षे भीष्मः रणाङ्गणे वर्तमानस्तावत्प्राणान्दधार यावद्रविरुत्तरायणगो नाभूत् ॥ ५० ॥

एवमिति । दशाहान्यत्यावस्थायामपि निर्व्यूढप्रतिज्ञः क-

ततो जिगीषुः प्रतिपक्षमाजौ
लङ्केश्वरः प्रागिव देवराजम् ॥
दध्रे धनुस्तुङ्गकिरीटमौलि-
राकल्परत्नद्युतिशोभिकर्णः ॥ ९२ ॥

स्वामिना जनितसत्क्रपेण सा
दिङ्मुखान्तरविसारि तेजसा ॥
दक्षिणा दिगिव कुम्भजन्मना
नाथवत्यजनि वैरिवाहिनी ॥ ९३ ॥

पीनां ध्वज इव ध्वजस्तेन नीलेन हेतुना । आहिते प्रसक्ते युद्धे भयङ्करः पतत्रिभिः परीतो व्याप्तः प्रहस्तो वीरोचितां दीर्घनिद्रां प्राप । 'प्रवातेपि ध्वज' इति हैमः । ' ध्वजचिन्हे पताकायां ध्वनिशौण्डिकशेफयोरिति ' विश्वः । पक्षे दशदिनं निर्व्यूढाऽयुतयोधवधप्रतिज्ञः अर्जुनेनाहिता युत् युद्धं यस्य । ' स्त्रियः संयत्समित्याजिसमिद्युध ' इत्यमरः । ह स्फुटं भीष्मं तीक्ष्णाग्रैर्वा व्याप्तः चिरं वीरशय्यां शरतल्पमधिशिश्ये । ' अधिशीङ्स्थासांकर्मे'ति कर्मत्वम् ॥ ९१ ॥

तत इति । लङ्केश्वरो रावणः प्रागिन्द्रमिव रामं जेतुं धनुर्दध्रे । आकल्परत्नानां भूषणमणीनां द्युत्या शोभमानाः कर्णाः यस्य सः । पक्षे ततो भीष्मनिपातानन्तरं कर्णो राधेयः आकल्परत्नद्युतिभिर्भासमानं धनुर्दध्रे । पुरा शक्रं पौलस्त्य इव । अर्जुनजिगीषुः ॥ ९२ ॥

स्वामिनेति । जनितयोधसन्मानेन स्वामिना रावणेन अगस्त्येन दक्षिणाशेव राक्षससेना सनाथाभूत् । पक्षे स्वामिना दुर्योधनेन जनिता सत्क्रिया अभिषेकादिसत्कारो यस्य तेन सर्वदिक्प्रसृतशौर्येण कुम्भजन्मना द्रोणेन भीष्मानन्तरं सेनान्या दुर्योधनसेना सनाथाभूत् । कुम्भोद्भवेन दाक्षिणेव ॥ ९३ ॥

स जीवनग्रहणमिथो कृतोद्यमः
क्षमापतेः प्रसभमजातविद्विषः ॥
ससंभ्रमोच्चलितपयोधिडम्बरैः
समण्डलैः परबलमभ्यवर्त्तत ॥ ५४ ॥

ससङ्गरे नरेन्द्रस्य विजयः प्रतिमाददे ॥
वसन्ते कामदेवस्य शीतरश्मेरिवोदयः ॥ ५५ ॥

इति राघवपाण्डवीये काव्ये प्रहस्तभीष्म-
वधो नामाष्टमः सर्गः समाप्तः ॥

स इति । सः रावणः द्रोणश्च जीवितग्रहणविधौ वधे जीविते सत्येव ग्रहणे जीवतो धृत्वा नयने एव क्षमापतेर्भूमिपतेः रामस्य शान्तिमतो युधिष्ठिरस्य च अजातप्रायशत्रोस्तन्नाम्नश्च पयोधिडम्बराः समुद्रतुल्यपटहा येषु । 'पटहाडम्बरौ समावि'-त्यमरः । बलैः सैन्यैः समं । सुमण्डलैरिति पाठः । शोभनैः सैन्यैः मण्डलाकारव्यूहैश्चेत्यर्थः ॥ ५४ ॥

स इति । 'विजयम्प्रति सन्दधे' इति पाठः सुगमः । कामदेवस्य कन्दर्पस्य काव्यप्रयोजकस्य च पक्षे स द्रोणः नरेन्द्रस्य जीवग्रहणप्रतिज्ञाने सति अर्जुनप्रीतिं दध्रे । पाठान्तरे प्रियशिष्यं जिष्णुं न विसस्मार । 'सङ्गरोङ्गीकृतौ युधी'ति विश्वः ५५

आवश्यकपदश्लेषव्याचिख्यासावशात्मनः ॥
लक्ष्मणस्य कृतौ सर्गः समग्रो ह्ययमष्टमः ॥ १ ॥

इति श्रीराघवपाण्डवीये टीकायां अष्टमसर्गः समाप्तिमगमत् ॥ ८ ॥

---

# नवमः सर्गः ।

सा सेना युद्धयात्रोत्सुकसुभटमुखाध्मातशंखानुभूः
न्नादा निक्काणभेरीमुरजरवसमाक्रान्तलोकान्तराला
वीतव्याधूतधौतध्वजपटपटलीचुम्ब्यमानाम्बुवाहा
वाहव्यूहक्षतस्मातलबहलरजोनिर्भरा निर्बभासे ॥ १ ॥

तदनु सा भरताग्र्यवरूथिनी धृतमहायुधयोधनिरन्तरा ॥
समररङ्गतले समदोच्चलद्गजघटे जघटे परसैनिकैः ॥ २ ॥

पणवानकशंखसिंहनादैर्बधिरीभूतनभोदिगन्तरालम् ॥
इतरेतरसक्तवैरिवीरं समरं संभृतसंभ्रमं बभूव ॥ ३ ॥

महाहवे महितमनोरथं द्विषं
महीपतेः प्रतिमुखमिन्द्रजिद्गुरुम् ॥
न्यवारयद्द्रुतमभिपत्य गोपतेः
शरीरजो भुजधृततुङ्गगोत्रधूः ॥ ४ ॥

सासेनेति । निस्सारस्ताम्ररचितश्चर्मितेकाननो महान् घटशाब्दोस्य पाठः स्यादित्युक्तो वाद्यविशेषः ॥ १ ॥

तदा भरतस्याग्र्यो अग्रजो रामो भरतवंश्यानामग्रणीर्युधिष्ठिरश्च धृतो मह उत्सवो यस्या । 'मह उद्धव उत्सव' इत्यमरः । आयुधैर्योधैश्च निरन्तराधृतमहाशस्त्रैर्योधैरिति वा । 'नृत्ययुद्धस्थले रागे रङ्गः क्लीबेत्र पुण्ययोरि'ति विश्वः । 'करीणां घटना घटे'त्यमरः । जघटे संघटं प्राप ॥ २ ॥

पणवादयो वाद्यविशेषाः। सिंहनादो वीरगर्जितं । 'सम्भ्रमत्रयमिच्छन्ति भयमुद्वेगमादरमि'ति विश्वः । 'अस्त्रियां समरानीकरणा' इत्यमरः ॥ 'भेर्यामानकदुन्दुभी' इति च ॥ ३ ॥

महान् महितो रामविजिगीषारूपो मनोरथो यस्य तं जिष्णुं

हरिप्रणेतारमुदूढबाणं महीगतं भानुमिव स्फुरन्तम् ॥
भित्त्वा स वीरानितरानरौत्सीदाकाशकुक्षिंभरिभिः पृषत्कैः ५

किरीटिनः स्यन्दनकेतुमौलिं
क्रान्त्वा नदन्तं कपिसैन्यनाथम् ॥
दृष्ट्वा विपक्षस्य विनेतुमिच्छो-
र्नेत्राण्यमर्षादरुणत्वमापुः ॥ ६ ॥

मोहायते रामचन्द्रस्य प्रतियोद्धारमिन्द्रजितो गुरुं रावणं । गवां रश्मीनां पतिः सूर्यः तच्छरीरजः सुग्रीवः भुजधृतगिरिभारो वारयामास ॥ पक्षे खाण्डवे इन्द्रं जितवानतः इन्द्रजित् गोपतेः स्वर्नाथस्येन्द्रस्य पुत्रः स्वभुजन्यस्तोच्चवंशभारोर्जुनः रणे युधिष्ठिरजिघृक्षारूपमहाभिलापस्तस्यैव प्रतियोद्धारं गुरुं द्रोणं संसक्तयुद्धाच्छीघ्रमागत्य वारितवान् ॥ धूरिति समासान्तविधेरानित्यत्वात् ॥ ४ ॥

हरीति ॥ उदूढबाणं शरीरसंलग्नशरं हरीणां वानराणां प्रणेतारं नायकं सुग्रीवं । अथ हरिर्हनूमान् प्रकृष्टो नेता रणादपवाहको यस्य तं उदूढाः प्रहताः बाणाः शराः येन तं लक्ष्मणं अथ च संलग्नशरं कपिनायकं हनुमन्तं चेति त्रयं महीगतं भूमौ निपतितम् । तादृशं स्फुरन्तं सूर्यमिव हित्वा भित्त्वेति पाठे मूर्च्छितः प्रागविद्धा स रावणः तदितवान् ॥ आकाशस्य कुक्षिम्भरिभिः पृषत्कैः बाणैररौत्सीत् रुरोध ॥ 'उभावात्मंभरिः कुक्षिम्भरिः स्वोदरपूरके' इत्यमरः ॥ पक्षे गृहीतबाणं कृष्णसारथिं जिष्णुं भूमिङ्गतं सूर्यमिव विधानान्तरं त्यक्त्वा पाठान्तरे विद्धा न द्रोणोन्यानरौत्सीत् ॥ ५ ॥

किरीति । मुकुटिनो रावणस्य तन्नाम्नोर्जुनस्य च उत्प्लुत्य स्थितं नीलं ध्वजं हनुमन्तं च विपक्षस्य शत्रोः रावणस्य विरु-

व्याक्षिप्तारातिरक्षोबलपतिरभितः संयुगं वर्त्तयित्वा
किंचिद्दोर्दण्डकण्डूः कृतशमनविधिर्मारुतेर्विक्रमेण ॥
वाञ्छाभङ्गे किरीटापनय इव कृते गोपतेर्नंदनेन
प्रापन्नाप्तेः क्षपायास्तिमिरमुचि मुखे सानुयात्रो निवेशम्॥७॥

रचितं नरदेवजन्मनाजौ
मुकुटस्येव मनोरथस्य भङ्गम् ॥
परिभावयतो न शर्म राज्ञो
निशि जज्ञे धृतराष्ट्रनन्दनस्य ॥ ८ ॥

द्रूपक्षस्य कर्णादेश्च नेत्राणि दशाननस्य स्वभावतः कर्णादीनामनेकत्वाच्च बहूनि ॥ ६ ॥

व्याक्षिप्तेति । व्याधूतः वैरिणां रक्षसां सैन्यस्य पतिः पौलस्त्यः अभितः इतस्ततो विद्धा नीलमूर्च्छानन्तरं मुष्टिना प्राहर्त्तुं मारुतेहनूमतो विक्रमेण प्रशान्तदोर्दण्डकण्डूर्गोपतेर्भूभर्त्तुर्नन्दनेन रामेण किरीटापनय इव वाञ्छाभङ्गेपि कृते सति सानुचरः प्रदोषे शिबिरं जगाम । सूर्यपुत्रेण सुग्रीवेण लक्ष्मणजिगीषाया रूपवाञ्छाभङ्गः इव भूपतिजेन रामेण किरीटापनयेपि कृते सतीति कश्चित् ॥ पक्षे दूरीकृतशत्रुरक्षः सैन्यानां पतिर्द्रोणः भीमेन तत्समं गदायुद्धेन शल्यस्य निर्मितत्वात्प्रशान्तकटकयुयुत्सुः स्वर्पतेरिन्द्रस्यात्मजेन जिष्णुना मुकुटापनयनेऽजीवत् । युधिष्ठिराजिघृक्षाभङ्गे कृते सति निवेशं गतः ' निवेशः शिबिरम्'इत्यमरः ॥ ७ ॥

रचीति । नरदेवजन्मना रामेणार्जुनेन च मनोरथस्येव मुकुटस्येव द्रोणप्रतिश्रुतयुधिष्ठिराजिघृक्षारूपस्य मनोरथस्य भङ्गं चिन्तयतः धृतेति धृतराज्यभारसुखसम्पत्तस्य रावणस्य धार्तराष्ट्रस्य दुर्योधनस्य च ॥ ८ ॥

गामिघस्रे विजयानुबन्धि सङ्कल्पसंसप्तकयोधवृन्दम् ॥
राजा रजन्यां विरतौ रणाय निजानुजोद्बोधनमाचचार ९

प्रातर्भूयः प्रवृत्ते समरमहमहारम्भहुम्भातिनादे
संध्यारागे भटानामरिरुधिरभरं भेजयत्यायुधानि ॥
वीरैर्वैरानुबन्धाप्रतिभटघटनाकाङ्क्षयारुध्य मार्गा-
वेकीभूतावभूतां रणरभसजितौदन्वदोघौ बलौघौ ॥१०॥

नरकभुवमथाग्रे वाहिनीनां यियासुं
पटुपटहनिनादध्वस्तनिद्रं दिनादौ ॥
पतिरमरारिपूणां सादरं भर्तृभक्तेः
परिचरणविधिज्ञं प्राहिणोत्सङ्गमाय ॥ ११ ॥

संप्रति श्रुतिविरोधशासनो वीरपाणमदघूर्णितेक्षणः ॥
उच्चचाल परमण्डलं प्रति प्रांशुकायपिहितैकदिङ्मुखः १२

आगेति ॥ राजा रावणः सुयोधनश्च निजानुजस्य कुम्भकर्ण-स्य दुःशासनादेश्च उद्बोधनं शयनादुत्थापनं प्रोत्साहनं च । वि-जयानुबन्धि जित्वरं अर्जुनाभिमुक्तं च । 'संसप्तकास्तु समयात्सं-ग्रामादनिवर्तिन' इत्यमरः ॥ ९ ॥

प्रेति ॥ महः उत्सवः । हुम्भागो रुतानुकारी वाद्यविशेषः १०

नरेति । यातनाभूमिरूपं रक्षसांपतिः पौलस्त्यः सोदरं कु-म्भकर्णं प्राप्तः संग्रामाय ॥ पक्षे नरसुतस्य भौमस्य पुत्रं प्रातर्वा-द्यादिराजभोगसम्पन्नं अमरारिपूणां दैत्यानां सोदरं भगदत्तं । पतिः दुर्योधनः ॥ ११ ॥

सम्प्रेति ॥ सः कुम्भकर्णो भगदत्तश्च ॥ 'वीरपाणं च यत्पानं वृत्ते भाविनि वारण' इत्यमरः ॥ परो रामो युधिष्ठिरश्च । प्रांशु-ना कायेन शरीरेण हस्तिना चाच्छादितैकदिङ्मुखम् ॥ 'म-हामुखं पुष्करदीर्घकाया' विति हलायुधः ॥ १२ ॥

तं सुप्रतीकेन सुरद्विपेन समं समीकाजिरमापतन्तम् ॥
किरीटकोटिस्खलितार्करश्मि द्रष्टुं न शेकुर्युधि वानरेन्द्राः १३

सन्नद्धे भगदत्तशंखनिनदत्रस्यात्त्रिलोके बले
ताम्यद्दिक्करिकुम्भकर्णपृतनाप्रारब्धकोलाहले ॥
तीक्ष्णद्रोणपतत्रिपीतसुभटप्रत्यग्ररक्तासवं
प्रावर्त्तिष्ट दिवोतिथीकृतमहायोधंमहायोधनम् १४॥

हेलानिक्षिप्तपृथ्वीधरसरलभुजङ्गेन्द्रभोगानुकारि
प्रौढोदञ्चत्करेण प्रलयपरिणतश्यामजीमूतभासा ॥
व्याभुग्नक्षोणिखण्डस्थपुटितसुतलं कुर्वता पादचारान्
संक्षुण्णा तेन सम्यक्क्षितिपतिपृतनाकुम्भिनाम्भोजिनीव १५

तं सु इति ॥ ईशानदिग्गजेन समानं तत्संज्ञकेन स्वगजेन सह च संग्राममागच्छन्तं । किरीटेति । अत्युच्चं तं कुम्भकर्णं भगदत्तं च युधि वानरेन्द्रा वा राजानोपीति च द्रष्टुं न शेकुः किं पुनर्योद्धुम् ॥ 'समीकं साम्परायिकमि'त्यमरः ॥ 'सुप्रतीकः शोभनाङ्गे भवेदीशानदिग्गजे' इति विश्वः ॥ १३ ॥

सन्नद्धेति । कृतसन्नाहहस्तिस्थितैः दत्ता वादिताः ये शंखास्तन्निनदभीतभुवने बले सति भगदत्ताध्मातशंखत्रस्तभुवनबले सन्नद्धे सतीति च । ताम्यद्दिग्गजया कुम्भकर्णसेनया ग्लायद्दिक्करिकुम्भया राधेयसेनया च द्रोणः काको भरद्वाजश्च ॥ 'पतत्रिपक्षिबाणाश्च द्रोणः काके कृपीपतावि'ति विश्वः ॥ १४ ॥

हेलेति ॥ तेन कुम्भकर्णेन करो बाहुः व्यरुग्णेत्यादि यथा स्यात्तथा स्थपुटितं भारेणाधोगमितं पादचारांश्च रणसञ्चारान् कुर्वता रामस्य सेना कमलिनीव चूर्णिता । पक्षे तेन कुम्भिना भगदत्तगजेन युधिष्ठिरसेना क्षुब्धा तेन ॥ १५ ॥

करधृतकरवालं शातदन्ताग्रकुन्तं
गुरुतरमदवेगात्सोढगाढप्रहारम् ॥
अविकलगलगर्जद्विश्वपर्जन्यघोषं
धृतिरतिबलमेनं पश्यतां नश्यति स्म ॥ १६ ॥
पादक्षोदैर्दशनदलनैः पुष्करस्य प्रहारै-
र्हस्तोत्क्षिप्तैः परिघमुसलैः केवलैर्हस्तघातैः ॥
भ्रामंभ्रामं प्रधनपृथिवीमण्डले चण्डवेगः
शीर्णव्यूहः प्रतिबलमसौ नाशयामास तूर्णम् ॥१७॥
भ्रमद्गजानीकमपास्तपत्ति-
नश्यद्धरिस्यन्दनवेपितोर्वी ॥
बभूव तत्कुञ्जरवेगभिन्नं
पयोरुहां वृन्दमिवारिसैन्यम् ॥ १८ ॥
सुग्रीवस्तदभिमुखं निपत्य भीमः
संग्रामं स्वभुजबलोचितं विधाय ॥

करेति । करः पाणिः शुण्डा च । करवालः खड्गः। शातं तीक्ष्णं दन्ताग्रमेव कुन्तो यस्य तं 'शातकुन्ताग्रदन्तमि'ति च पाठः गजध्वनिः एनं कुम्भकर्णं भगदत्तं च । 'मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोरिति' मेदिनी ॥ १६ ॥

पादेति ॥ पुष्करः खड्गः शुण्डाग्रं च 'नीरे करिकराग्रे च व्योम्नि खण्डे फलेम्बुजे । तीर्थौषधिप्रभेदे च रूपे वक्रे च पुष्करमि'ति विश्वः॥ हस्तो भुजो शुण्डा च। भ्रामं भ्रामं भ्रान्त्वा भ्रान्त्वा प्रधनं युद्धं । असौ कुम्भकर्णो भगदत्तश्च ॥ १७ ॥

भ्रमेति । गजो वानरभेदः करी च । हरयो वानराअश्वाश्च स्यन्दनं गमनं रथश्च। तदारिसैन्यं करिभिन्नं कमलवृन्दमिव तत् कुञ्जरेण भिन्नमारिसैन्यं च । अरी रामयुधिष्ठिरौ ॥ १८ ॥

द्राग्दैवाद्विषमदशाङ्गतोपि तस्मा-
दात्मानं कथमपि मोचयाञ्चकार ॥ १९ ॥
स कोपितो मारुतिना मनस्वी
महास्त्रजालेन रणे रिपूणाम् ॥
व्यूहं बृहद्बाहुबलो बिभेद
प्राग्ज्योतिषेशस्त्रिपुरं यथोग्रः ॥ २० ॥
संसप्तकानां द्विषतां वधाय
निबद्धकक्षः प्रतिपक्षाभिन्नम् ॥
दूरं प्रसर्पद्विजयः स्वसैन्यं
दृष्ट्वा तमायात्तरसाभिरामः ॥ २१ ॥
अथ सुररिपुराजपुत्रयोस्त्रिभु-
वनविस्मयकाकहंसयोः ॥
समजनि समरस्तदा तयो-
र्ज्वलदमरास्त्रनिरन्तराम्बरम् ॥ २२ ॥

सुग्रीवेति ॥ वानरेशः शोभनग्रीवश्च । भीमो भयङ्करो वृको-दरश्च । विषयेति हृत्प्राणसंशयं च । तस्मात्कुम्भकर्णात्करिणश्च । कथमपि तत्कर्णादिच्छेदनेन लाघवं च ॥ १९ ॥

सेति । कुम्भकर्णो भगदत्तश्च मारुतिना हनूमता भीमसेनेन च प्राक् पुर उग्रो भयानकः ईशः शिवः ज्योतिषाग्निना त्रिपुर-मिव ॥ प्राग्ज्योतिषेशो भगदत्तः। उग्रो रुद्रस्त्रिपुरमिवेति च २०

संसेति ॥ तं कुम्भकर्णं अभिलक्षीकृत्य रामस्तरसा वेगेन आजगाम ॥ प्रसर्पद्विजयः प्रवृद्धजयः संसप्तकानां रणादनिव-र्त्तिनां पक्षे संसप्तकाः सुशर्मप्रभृतयः संसर्पत्स्वसैन्सं दृष्ट्वा विज-योर्जुनः तं भगदत्तं बलेनाभिरामः सुन्दरः ॥ २१ ॥

अथेति ॥ सुररिपुः कुम्भकर्णभगदत्तौ राजपुत्रौ रामार्जुनौ२२

अत्रान्तरे मुक्तमनेन रौद्रं
शूलं यथा वैष्णवमस्त्रमुग्रम् ॥
हरिर्मरुत्प्रीतिकरोभ्यगृह्णा-
द्यशोमयी तत्स्रगभूदमुष्य ॥ २३ ॥

तस्याथ नरसिंहस्य शिलीमुखनखावलिः ॥
रिपुकुञ्जरगात्रेषु निपपात निरन्तरम् ॥ २४ ॥

न्यञ्चद्भूचक्रभारोद्वहनपरिगतायासदिक्कुम्भिकुम्भं
सद्यस्त्रस्तामरस्त्रीकरपुटपिहितोत्पक्ष्मचक्षुःसरोजम् ॥
अन्योन्योत्कर्षसक्ता कृतकलकलहं खेचरैर्लोकपालाः
सम्प्राप्तास्ते नितान्तप्रतिभयमुभयोः संमुखं तं युगान्तं २५

विधाय पूर्वं च तुरङ्गभङ्गं
नरप्रवीरेण विरोधिवर्यः ॥
मत्तः करी केसरिणेव मौलौ
जघ्ने नखेनेव शिलीमुखेन ॥ २६ ॥

अत्रेति ॥ अनेन कुम्भकर्णेन भगदत्तेन च वैष्णवमस्त्रमिव रौद्रं शूलमिव वैष्णवमस्त्रं च मरुत्प्रीतिकरो हरिर्वायुपुत्रो हनूमान् अभ्यगृह्णाद्बभंज तद्भञ्जनरूपा तस्य सा यशोमयी मालेवाभूत् ॥ देवानन्दनः कृष्णः जग्राह । तद्वैष्णवमस्य यशोमयी वैजयन्त्यभूदिति च ॥ २३ ॥

तस्येति । तस्य रामस्यार्जुनस्य च । नरसिंहस्य पुरुषश्रेष्ठस्य ॥ शिलीमुखा एव नखा रिपुकुञ्जरो वैरिश्रेष्ठः कुम्भकर्णो वैरिणः करी च ॥ २४ ॥

न्यञ्चदिति । लोकपालाः इन्द्रादयः उभयोः रामकुम्भकर्णयोः जिष्णुभगदत्तयोश्च इति भयङ्करं युगान्तप्रकृतम् ॥ २५ ॥

विधायेति ॥ नरवीरेण रामेणार्जुनेन च चतुरङ्गस्य सैन्यस्य

स जिष्णुना सङ्गररङ्गमध्ये
विपक्षवीरः क्षपितामहास्त्रम् ॥
खरः पुरस्तादिव कुम्भकर्णो
रामेण जघ्ने रणपण्डितेन ॥ २७ ॥

नखरशरानिकृत्तं तच्छिरः प्राक् शरीरा-
दपतदुरुकिरीटोद्भासि दूरस्नुतासृक् ॥
दवदहनशिखाभिर्दह्यमानं महाद्रेः
शिखरमिव सधातुस्यन्दमिन्द्रास्त्ररुग्णम् ॥ २८ ॥

कण्ठच्छेदादुपरि विलसच्छोणिताम्भश्छटाना-
मासारेण क्षणमरुणयन्नन्तरिक्षस्य कुक्षिम् ॥
तत्कायोपि प्रसभमपतद्दूरयात्रानिमित्तं
क्षोणीदेव्या इव विरचयन् गौरवेण प्रणामम् ॥२९॥

तस्य वीरवरिष्ठस्य भ्रूभङ्गि पतितं शिरः ॥
बभौ सन्ततिवात्सल्याद्धात्र्येवाङ्के निवेशितम् ॥३० ॥

विरोधिवर्यौ महावैरी कुम्भकर्णो विरोधिनो भगदत्तस्य वरिष्ठ-स्य च सिंहेन मत्तहस्तिनखेनैव मौलौ शिलीमुखेन जघ्ने ॥ न-खेन केसरिणेव मत्तः करी बाणेन जघ्ने इति च ॥ २६ ।

सेति ॥ जयशीलेन रामेण विपक्षवीरः कुम्भकर्णः पुरस्तात् खर इव पक्षे पुरा रामेण कुम्भकर्ण इव खरः तीव्रो भगदत्तो । जिष्णुना अर्जुनेन च ॥ २७ ॥

नरेति ॥ नरवरो रामोर्जुनश्च तस्य कुम्भकर्णस्य भगदत्तस्य च शिरः ॥ २८ ॥

कण्ठेति ॥ तस्य कुम्भकर्णस्य भगदत्तस्य च धात्र्या उप-मात्रा पृथिव्या च । 'धात्री जनन्यामलकी वसुमत्युपमातृष्वि'-त्यमरः ॥ २९ ॥ ३० ॥

सदैवतैर्वैरिनिपातहृष्टैः प्रशंस वीरैर्नरदेववीरः ॥
दर्पोद्धतं शम्बरमाजिभूमौ विजित्य राजन्निव कामदेवः ३१॥

इति राघवपाण्डवीये महाकाव्ये कुम्भकर्णभगदत्तवधो नाम नवमः सर्गः समाप्तः ॥

——००——

# दशमः सर्गः।

ततो भृशं व्याकुलितान्तरात्मा
स्वपक्षघातेन विपक्षनाथः ॥
प्रायुङ्क्त वीरान्पुनरेव योद्धु-
मापत्सु मुह्यन्ति समानभाजः ॥ १ ॥

ते राज्ञो धृतराष्ट्रस्य कुमाराः कुपिता भृशम् ॥
रक्षःपुरोगमाश्चेरुर्दैवशासनकारिणः ॥ २ ॥

सदैवेति। स रामोर्जुनश्च दैवतैः वीरैश्च। देवसहितैः वीरैरिति व्याख्याने नरदेवयो रामार्जुनयोश्च। वैरी कुम्भकर्णो भगदत्तश्च। सूर्यकं राजविशेषं। कामदेवः काव्यप्रयोजकः ॥ शम्बरमिति पाठे कन्दर्प पक्षे दैत्यविशेषो राजपक्षे तन्नामानम् ॥ ३१ ॥

इति राघवपाण्डवीये महाकाव्ये टीकायां भगदत्तकुम्भकर्णवधो नाम नवमः सर्गः समाप्तः ॥ ९ ॥

———

तत इति ॥ विपक्षनाथः रावणो दुर्योधनश्च स्वपक्षः कुम्भकर्णादिः भगदत्तादिश्च ॥ १ ॥

तइति ॥ राज्ञो राष्ट्रधर्त्तुः पौलस्त्यस्य धृतराष्ट्रसंज्ञस्य च। कुमारा देवान्तकादयो दौःशासनिमुखाश्च ॥ २ ॥

घण्टाटङ्कारघोरोड्डमरुकरिघटासङ्कटक्षोणिपृष्ठं
धाटीभिर्घोटकानां झटिति खरखुरोद्भूतधूलीवितानम् ॥
सान्द्राणां स्यन्दनानां ध्वजपटपटलीलीढदिक्चक्रवालं
सैन्यं सन्नद्धमासीत्पटुसुभटभुजामण्डलोद्भूतखड्गम् ॥३॥

आमूलादाजिरस्यान्तादाचार्येण प्रवर्त्तितम् ॥
पद्मं परबलानां तत्पश्यतां विस्मयोऽभवत् ॥ ४ ॥

ततो युगान्तार्णवधीरघोषा व्याधूतनानाविधदुर्निरीक्ष्याः ॥
अभ्युद्ययुर्भीममुखा नरेन्द्रसेनाधिनाथा परसैन्यवीराः ॥५॥

घण्टेति । घण्टायाष्टङ्कारेण घोर उत्कण्टो डमरुर्वाद्यविशेषस्तद्वती गजसंहतिः धाटीभिः समूहैः 'दोषा च भुजा भुज' इति शब्दभेदः । उदूर्णाः उद्यताः ॥ ३ ॥

आमूलेति ॥ मूलादारभ्य रणाङ्गणपर्यन्तं आचार्येण तत्कर्माधिकृतेन द्रोणेन च पद्मसंख्याविशेषं पद्ममिव पद्मं चक्रव्यूहं च ॥ यद्वा पदेर्यत् पद्यते गम्यते श्रीरत्रेति पद्मं चक्रं गम्यते हि या दाक्षादिस्थ तत्र श्रीः'चित्राणि चक्रेध्वनि चक्रवर्तिचिह्नं तदङ्घ्रिप्रतिमासु चक्रमि'ति श्रीहर्षः ॥ ' त्वं वार्जुनो वा कृष्णो वा विन्द्यात्प्रद्युम्न एव वा ॥ चक्रव्यूहं महाबाहो पञ्चमो नोपपद्यते ॥ तं वाभिमन्युर्वचनात् पितुर्ज्येष्ठस्य भारत । बिभेद दुर्भिदं संख्ये चक्रव्यूहमनेकधे'ति भारतात् । प्रविशासि न च निर्गन्तुं ज्ञातासि व्याकुलत्वमातनुषे ॥ बालकचेतसि तस्याश्च चक्रव्यूहमभिमन्युरेवेति प्रयोगाच्चैवं व्याख्यातम् ॥ पार्थः सिन्धुरवं तं पद्मव्यूहं समीक्ष्य सिन्धुरेवं तामिति युधिष्ठिरविजयदर्शनात्पद्मशब्दश्चक्रपरो व्याख्येयः यथाश्रुतो वास्तु । 'पद्मोऽस्त्री पद्मके व्यूहे पद्मसंख्यान्तरेषु ' च इति मेदिनी ॥ ४ ॥

तत इति ॥ नानायुधैर्वृक्षादिभिश्च । भीममुखाः भीषणास्याः वृकोदरादयश्च ॥ परस्य रावणस्य दुर्योधनस्य च ॥ ५ ॥

नानायानभयानकं गुरुधनुर्ज्याघोषघोरं नद-
द्रक्षोराजकुमाररक्षितबहुस्कन्धं द्विषां तद्बलम् ॥
पद्मव्यूहरजोभरैः सर इव व्यापिञ्जरं कुञ्जरै-
रावव्रे पवनात्मजप्रभृतिभिर्वीरैर्विगाहोद्यतैः ॥ ६ ॥

महीमहाभारनिरासहेतुं
सुभूषमाकल्पमनल्पकीर्त्तेः ॥
सुराङ्गनाश्लेषविधायिनं ते
संग्रामयज्ञं बलिनो वितेनुः ॥ ७ ॥

द्विषां सुशर्मापनयैककर्त्ता समृद्धगोपालबलप्रणोदी ॥
देवान्तकः प्राप्य हरेः कुमारं विपक्षकं पार्थमरुन्ध सैन्यैः ८

नेति । नानायानानि रथाश्च । गुरूणि वरिष्ठानि गुरोर्द्रोणस्य च नदद्भिः पौलस्त्यपुत्रैः पाल्यमानसेनासंनिवेशम् शब्दायमानहलायुधराक्षसं दुःशासनादिरक्षितस्कन्धं च । पद्मेति । अब्जपुञ्जपरागैः पिञ्जरं सरो हस्तिभिरिव हनुमदादिभिर्वैरिणां बलमावृतम् । पक्षे पद्मोपमा पद्मपदप्रयोगान्यतरगम्या । चक्रव्यूहधूलीधूसरं कौरवबलं गजैः सर इव भीमादिभिरावव्रे ॥ ६ ॥

महीति । महत्याः कीर्त्तेः कल्पान्तपर्यन्तं भूषणम् ॥ ७ ॥

द्विषामिति । सुशर्म शोभनसुखं तदपनायकः । गोः भूमेः पालो रामः प्रणोदी वारकः देवान्तको रावणिः । हरेर्वालिनः कुमारगङ्गदं विपक्षाणां कम्पार्थं भयजननाय । पक्षे द्विषामपाकर्त्ता सुशर्मा त्रिगर्तः युधिष्ठिरसैन्यनिवारकः कृतवर्मसैन्यानां ' नारायणाश्च गोपाला ' इति भारते प्रसिद्धाः स्वयं पुरोभूय तेषां तिरस्कर्त्ता । वा । दीव्यन्तीति देवाः विजिगीषवस्तेषां तस्य दैत्यवंशत्वादमराणां वा अन्तक इव सन्त्रासकः । हरेः कुमारमैन्द्रं पार्थं अर्जुनं । विगतः पक्षः सहायवर्गो यस्य तमेकाकिनम् ॥८॥

समापतन्तं प्रसभं समन्तादपि द्विषच्चक्रविभेददक्षाः ॥
व्यूहं न भेत्तुं व्यसहन्त वीराः पद्मं मयूखा इव शीतरश्मेः ९
समुद्यमस्यन्दनासिन्धुराजं व्यूहं द्विषां दुष्करभेदमन्यैः ॥
दृष्ट्वा सपत्त्राकरणाय तस्य न्ययुङ्क्त राजा पुरुहूतपौत्रं १०
स सांनिदेशं पितृसोदरस्य संस्थाप्य मालामिव मौलिदेशे ॥
तूर्णं रथेनेव मनोरथेन प्रत्यर्थिनां स्कन्दमभिप्रतस्थे ॥ ११ ॥
सबाणवंशोच्चशरासनस्फुरत्करालरंहःकृतमार्गमग्रतः ॥
जवाज्जगाहे परमण्डलं बली सुरापगापूरइवाम्भसां निधिं १२
तमाशु यान्तं रिपुचक्रमर्दं तदानुगन्तुं व्यसहन्त नान्ये ॥
द्राक् सिन्धुराजन निरुद्धमार्गाःपुरा हनूमन्तमिवात्मवर्गाः १३

समिति । वैरिवृन्दभेदे दक्षा अपि वीराः देवान्तकादिसमूहं भेत्तुं नाशक्नुवन् । चन्द्रकराः पद्ममिव । पक्षे शत्रुसमूहभेत्तारोपि पद्मोपमं चक्रव्यूहम् ॥ ९ ॥

समुद्येति । समुद्धतैः स्यन्दनैः गमनैः समुद्रतुल्यं । सिन्धुरैर्गजैरजतीति गच्छतीति वा । सिन्धुराजो जयद्रथश्च । सपत्राकरणाय सपुष्पशरप्रवेशेन सपत्राकर्तुं 'सपत्रनिष्पत्रादतिव्यथने' इति डाच् । राजा सुग्रीवो युधिष्ठिरश्च । पुरुहूतपौत्रमङ्गदमभिमन्युं च 'चक्रं द्विषामि'त्यादि पाठः ॥ १० ॥

सेति । सोङ्गदोभिमन्युश्च पितुः सोदरं सुग्रीवं युधिष्ठिरंच रथेनेव मनोरथेन प्रत्यर्थिनां स्कन्दं रथेन च । स्कन्दः सेनासन्निवेशः ॥ ११ ॥

सेति । सोङ्गदः बाणैर्वंशैरुच्चैः शरैः सासनैश्च वृक्षविशेषैः स्फुरतः कराग्रस्य रंहसा वेगेनाग्रतः कृतमार्गम् ॥ पक्षे सोभिमन्युः सशरवेणुमयोच्चापस्फुरत्कराग्रस्य रंहसा ॥ १२ ॥

तमिति । तमङ्गदं अभिमन्युं च चक्रं समूहो व्यूहविशेषश्च

परिभ्रमत्कुञ्जरनक्रचक्रं
व्याविद्धवाजिव्रजवीचिमालम् ॥
विचिक्षिपे तेन विपक्षसैन्यं
मन्थाचलेनेव महार्णवाम्भः ॥ १४ ॥

वीरान्बहून् बाहुबलेन मुख्यान्निघ्नन्तमेनं रणवेगनिघ्नम् ॥
न वीक्षितुं स्म प्रभवन्त्यमित्रा नैदाघमर्कारभसावभासम् १५

मातंगैरिव गण्डशैलकलिताः सिन्दूरसान्द्रत्विषः
क्रान्ता भूषणभाषणैर्भटभुजैर्वेल्लद्भुजङ्गप्रभैः ॥
व्याकृष्टध्वजकाननाः शरधनुश्चक्राधिनक्राकुलाः
संरुद्धध्वजिनीपथा रुधिरजाः प्राहुर्महासिन्धवः १६

विरोधिनां निकरमपोढलक्ष्मणं
वितन्वता प्रसभमनेन वैरिणः ॥
परःशताः समरतले निपातिताः
प्रफुल्लभूरुह इव चण्डवायुना ॥ १७ ॥

वीरवर्गैकनिर्घातनिपातितबृहद्बलम् ॥
द्विषं नरोन्तकः प्राप तं दुःशासनसंभवः ॥ १८ ॥

समुद्रनिरुद्धाः कपयो हनूमन्तामिव जयद्रथनिरुद्धा भीमादयः सिन्धुनिरुद्धा वानरा मारुतिमिवेति च ॥ १३ ॥

परीति । तेनाङ्गदेनाभिमन्युना च ॥ १४ ॥ १५ ॥

मातङ्गैरिति । गजैर्गण्डशैलवत्य इव वेल्लं उच्छलन्तः शरादयो नक्र इव ॥ १६ ॥

विरोधेति । अपोढानि त्यक्तानि लक्ष्मणानि चिह्नानि येन तं निरस्तदुर्योधनपुत्रं च ॥ १७ ॥

वीरइति । तमङ्गदं बृहद्बलं महासैन्यं बृहद्बलः कौसल्याश्च द्विषंश्चासौ नरान्तको रावणिः द्विषतां नराणां अन्तकश्च । तं

यशोनिधानस्य निधानभूतं जगत्त्रयीविस्मयनीयकीर्त्तिं ॥
सुराङ्गनालोचनलोभहेतु तयोरभूत्संगरकर्म भीमम् ॥१९॥
मिथःसमानं कृतसंप्रहारौ दिव्यैर्दिविव्याहृतसाधुवादौ ॥
जगत्प्रतिष्ठापितशुभ्रकीर्ती स्वस्थावभूतामचिरादुभौ तौ२०
तदा सौभद्रमाकर्ण्य कुमारं निहतं परैः ॥
शुशोच राजा चित्तेन व्याकुलेन दशाननः ॥ २१ ॥
विनीयमानस्य सुहृद्वचोभिरशान्तशोको नलधूपितस्य ॥
निबद्धवैरस्य विरोधिवर्गैर्न स्वास्थ्यमासीत्पितुरस्य चित्ते२२
प्रधानहेतुभूतस्य निजात्मजनिपातने ॥
पराक्रमं न ममृषे वृद्धक्षत्रात्मजस्य सः ॥ २३ ॥

अङ्गदं अभिमन्युं च दुःखेन शास्यते इति दुःशासनो रावणो दुर्योधनानुजश्च ॥ १८ ॥

यश इति । निधानं निधिः आवस्थापनं वा । तयोरङ्गदनरान्तकयोः अभिमन्युदौशासन्योश्च ॥ १९ ॥

मिथेति । अङ्गदः स्वस्थः निश्चिन्तः नरान्तकस्तु स्वर्गस्थोभूत् । पक्षे अभिमन्युः स्वस्थो दौशासनिर्हतः ॥ २० ॥

तदेति । तदा असौ दशाननो राजा भद्रं कुमारं नरान्तकं पक्षे शोकावस्था आनने यस्य दुःखदशायामाननं जीवनं यस्येति वा । राजा युधिष्ठिरः सौभद्रं सुभद्रासुतं अभिमन्युं नास्माकं दशा तदवस्थानेति शुशोचेति वा ॥ २१ ॥

विनीयेति । अस्य नरान्तकस्य पिता रावणोभिमन्योः पितार्जुनश्च ॥ २२ ॥

प्रधानेति । वृद्धक्षत्रस्य दशरथस्यात्मजोरामः नरान्तकः सः रावणः पक्षे निजात्मजोऽभिमन्युः वृद्धक्षत्रो जयद्रथपिता । रामोर्जुनः ॥ २३ ॥

औद्धत्यपश्चात्कृतसिन्धुराजे
पुनःप्रतिद्वन्द्विनि वैरिचक्रे ॥
रणाङ्गणं प्राप नरेन्द्रसेना
प्रातर्दिवं भानुमतः प्रभेव ॥ २४ ॥

अथातिकायस्य जयद्रथस्य वधानवेगेन कृतप्रतिज्ञः ॥
धनुर्वितन्वन्विजयस्थवीयःपरान्सराजावरजोऽभ्ययुङ्क्त २५
गुरुणा कृतवर्मणास्मयोधिप्रतिपक्षेण सुदक्षिणेन भूयः ॥
स विधायमहाहवं मनस्वी परसेनाम्बुधिमध्यमाजगाहे २६
अकलितलघुपातं संप्रविष्टेन दूरा-
दलघुविकिरतोच्चैर्विश्वतो विक्रमाग्निम् ॥

औद्धत्येति । औद्धत्यपश्चात्कृतः तिरस्कृतः पृष्ठतः स्थापितश्च सिन्धुराजः समुद्रो जयद्रथश्च येन नरेन्द्रो रामो युधिष्ठिरश्च सेना संग्रामाङ्गणं प्राप रवेः प्रभा प्रातर्दिवसमिव प्रातर्युद्धभूमिं प्रापेति च ॥ २४ ॥

अथेति । अतिकायो रावणिः महाकायश्च जयद्रथो जैत्रस्यन्दनः सिन्धुराजश्च विजये स्थिरं धनुर्विधुन्वन् विजयोर्जुनः स्थिरं धनुरिति च सः रामोवरजो लक्ष्मणः रामावरजेन च सहितः ॥ २५ ॥

गुरुणेति । गरिष्ठेन कृतकवचेन स्म पादपूरणे युद्धशीलेन सुतरां दक्षेण च पुरस्तादुपस्थितेन येनकेनापि राक्षसवीरेण सह युद्ध्वा स लक्ष्मणः परसैन्यमध्यं प्रविवेश । पक्षे अस्मयो गर्वरहितः सन् द्रोणेन ततः कृतवर्मणा हार्दिक्येन ततोधिकेन प्रतिपक्षेण सुदक्षिणनाम्ना काम्बोजेन भूयः अत्यन्तं तदन्तपर्यवसायि यथा स्यात्तथा युद्ध्वा सोर्जुनः कौरवसेनारूपस्य शकटपाश्चात्यसूचिगर्भरूपव्यूहाभ्यां दुरवगाहस्य महार्णवस्य मध्यः ॥ २६ ॥

रणभुवि परचक्रं व्याकुलं तेन तेने
त्रिपुरमिव पुरस्तात्सायकेन स्मरारेः ॥ २७ ॥
विन्दानुविन्दप्रतिपक्षभेत्ता प्रणीतसंसप्तकजीवमोक्षः ॥
सुदर्शनोद्योगहरः स सद्यश्चकार दुर्योधनमानभङ्गम् ॥२८॥
तिरोहितार्कांशुचयैस्तदीयैर्निरुन्धतः स्वैर्विशिखैर्विपक्षम् ॥
श्रमं विनीयोर्जितविक्रमस्था रयेण चक्रुर्हरयोस्य हर्षम् २९
यया जघान दुर्धर्षं वीराणामृषभं हरिम् ॥
तयैव जघ्ने गदया रणे मत्तः श्रुतायुधः ॥ ३० ॥

अकलितेत्यादि । क्रियाविशेषणं तेन लक्ष्मणेन जिष्णुना च २७

विन्देति । प्रथमोमस्थितो विन्दः पश्चादुपस्थितोनुविन्दः तादृशस्य प्रतिवीरस्य भेत्ता कृतरणः निर्वर्त्तितवधः सुदर्शनानां पुरोनश्यमानवीराणां उद्योगप्रतिघातकः सः लक्ष्मणः दुर्योधनस्य दुःखयोधनीयस्य रावणवलस्य तादृशां तद्योधानां मानस्य दर्पस्य गौरवस्य वा भङ्गं चकार । पक्षे विन्दानुविन्दावावन्त्यौ तयोः प्रतिवीरयोः हन्ता संसप्तकानां सुशर्मादीनां कृतघातः सुदर्शनस्य वीरविशेषस्योद्योगहारः सोर्जुनः दुर्योधनस्य द्रोणवद्धमन्त्रस्य कवचस्य चापमानं चकार ॥ २८ ॥

तिरोहितेति । हरयो वानरास्तस्य लक्ष्मणस्य हर्षं चक्रुः पक्षे शरगृहं कृत्वा सूर्यरश्मीनामपि प्रवेशं निरुन्धतोर्जुनस्य वाणी । विरोधिपक्षे वार्यमाणे कृष्णेन मुक्ताः पायिताःअर्जुनोत्पादितनिपानजलासमाश्वस्ताः सोत्साहपादविक्षेपाः हरयः अश्वाः अर्जुनस्य यथापूर्वं वेगेन हर्षं चक्रुः ॥ २९॥

ययेति । वीराणां दुर्धर्षं ऋषभं नाम वरुणात्मजं वानरं श्रुतायुधः प्रसिद्धगदाप्रहरणो मत्तो महापार्श्वो रावणानुजः यथा गदया जघान तेन तयैव गदया स निहतः । अत्र रामायणे ।

अथ संगररङ्गमभ्युपेतौ
क्षपयामासतुरोजसा विपक्षम् ॥
पवमानशरीरजश्च भीमो
युयुधानश्च पतिर्वरूथिनीनाम् ॥ ३१ ॥

'युद्धोन्मत्तं चमत्तं च भ्रातरौ चापि रावणः। महापार्श्वं महासत्त्वं भ्रातरं च महोदरमि'त्युत्तरार्द्धोक्तौ मत्तौ युद्धोन्मत्तावेव न तु तदन्यौ अनन्तरं 'निर्जग्मुर्नैर्ऋतश्रेष्ठः षडेते युद्धकाङ्क्षिणः। त्रिशिराश्चातिकायश्च देवान्तकनरान्तकौ । महोदरमहापार्श्वौ निर्जग्मुः कालचोदिता' इति षण्णां परिगणनात् । तावतामेव युद्धस्य वधस्य दर्शितत्वात् ॥ महोदरवधानन्तरं तस्मिन्युद्धे मत्तपदप्रयोगात् । महापार्श्ववधावसरे 'गदामादाय संक्रुद्धो मत्तो राक्षसपुङ्गवः। इत्युपक्रम्य 'अनया गदया भग्नो विशीर्णदशनेक्षणः। निपपात तदा मत्तो वज्राहत इव द्विपः'। इति तस्य मत्त इति व्यपदेशाच्च भट्टिकाव्ये मन्मतयोरेव निर्देशात् स्पष्टम् । एतेन 'महापार्श्वः श्रुतायुध इति पाठः रणे मत्त इति तु प्रामादिक' इति वदन्तो रामायणाभिज्ञंमन्याः परास्ताः। पक्षे श्रुतायुधो नाम वारुणिः पर्णाशानदीसुतः अयुध्यमानप्रहृतस्त्वद्धातिन्या पितृदत्तगदया वीराणां श्रेष्ठं दुर्धर्षं कृष्णं प्रमत्तो जघान स च तयैव जघ्ने ॥ ३० ॥

अथेति । भीमो भयङ्करः पवमानसूनुर्हनूमान् युध्यति इति युयुधानां वरूथिनां सेनानां पतिः नीलश्च विरोधिपक्षं क्षीणं चक्रतुः। युध्यतेरौणादिके आनाकि बाहुलकाद्द्वित्वे युयुधानः। एतच्च युध्यतौ माधवीयधातुवृत्तौ स्पष्टम् । पक्षे भीमसेनसात्यकी। विपक्षं दुर्योधनम् ॥ ३१ ॥

  

एकेन भग्नाङ्घ्रिपरंहसोच्चै-
रलं बलध्वंसकृतापरेण ॥
आभ्यां निरासे युधि वैरिवृन्दं
यथान्धकारः शशिभास्कराभ्याम् ॥ ३२ ॥

दधज्जिगीषां धृतिमाञ्जनेय-
कृतावमानोपि सवृष्णिवीरः ॥
त्वाष्ट्रस्य वज्रीव रणे त्रिमूर्धे-
श्चिच्छेद भूरिश्रवसःशिरोधिम् ॥ ३३ ॥

एकेति । एके ताभ्यां हनुमन्नीलाभ्यां भीमसात्यकिभ्यां च एकेन हनूमता भीमेन च भग्ना अङ्घ्रिपाः वृक्षाः येन तादृशरंहसा मूलरक्षकरावणरंहोरूपे तत्पुत्रं देवान्तकहन्त्रा च अत्यन्तं भग्नमूलरभककर्णवेगेन च विध्वंसकृता विद्रावितसैन्येनापरेण नीलेन सात्यकिना च अयुतसंख्याकं युतसङ्घत्यस्थितं स्थितं च वैरिणां रक्षसां कौरवाणां च । 'अन्धकारो स्त्रियां ध्वान्तमि' त्यमरः ॥ ३२ ॥

दधदिति । जेतुमिच्छां धैर्यं दधत् स आञ्जनेयो हनूमान् वृष्टिमेघ इव परस्पराघातविवृद्धयुयुत्सारितः तदीयखड्गदृढाघातेन मूर्च्छितत्वात्कृतावमानः त्वष्टुरपत्यस्य त्रिशीर्ष्णोर्बहुकर्णस्य विश्वरूपस्य वज्री इन्द्र इव षट्कर्णस्य त्रिशिरसो रावणात्मजस्य तदीयखड्गेन शिरोधिं कन्धरां चिच्छेद । वृष्णिः शिवगणाः विलसद्वृष्णिगणैरिति माघश्लेषणादिति काश्चित्तन्न । अचिराजितमीनकेनो विलसन् वार्ष्णगणैर्नमस्कृतः ॥ क्षितिपः क्षपितो धृतान्धको हरलीलां स विडम्बयिष्यती'ति चैव हि तदुक्तौ वार्ष्णौ विलसन् वृषारूढ इत्यर्थः 'वृषोक्षिण सुकृतेन्द्रयोरिति' विश्ववैजयन्त्यौ ॥ इति सर्वंकषादौ व्याख्यानात् सत्यपि

प्राप्य भङ्गमिननंदनाद्यशः पूरिताखिलजगन्महोदरात् ॥
नील एव पुनरुद्बभौ मणिः शाणघृष्ट इव भीमविक्रमः ३४
अथ रिपुवधपुष्टद्भूमिपार्थः प्रसर्पन्
प्रतिबलजलराशौ साधनैः साधिताध्वा ॥
त्वरितगतिसुमित्रानन्दनः संप्रपेदे
तपन इव समीपं सिंराजस्य सूनोः ॥ ३५ ॥

वृष्णेर्गणत्वे तच्छायैर्मानाभावात् मल्लमेषयुद्धविरामस्य सुप्रसिद्धत्वाच्च। पक्षे जेतुमिच्छां दधत् ऊने धैर्ययुक्तः भूरिश्रवसः कौरवविशेषस्य केशग्रहणादिना कृतावमानोपि स वृष्णिधीरः सात्यकिः शिरश्चिच्छेद त्वाष्ट्रस्य त्रिशिरस इन्द्र इव 'वृष्णिस्तु यादवे मेषे' ति विश्वः । 'वृष्णिः क्षत्रियभेदयोतिरि' ति कोशान्तरं। सुवृष्णीक्ष्यां किञ्चित्पूर्णादिसूत्रेभिषु तैः उत्तम्(?)३३

प्राप्येति । इनस्य स्वामिनो रावणस्य नन्दकाङ्गातुः महोदरनाम्नः सकाशाद्भगं प्रहारं प्राप्य यशःपूरितत्रिभुवनो नीलोग्निपुत्रः पुनरेवोद्बभौ । भीमो महोदरवधेन पराक्रमो यस्य भग्नं एकदेशक्षितिं प्राप्य शाणे रत्नसंस्कारकपाषाणे घृष्टमणिरिव 'रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेपि चे' त्यमरः। पक्षे यशः पूरितत्रिभवनादरमूर्त्तेः सूर्यपुत्रात्कर्णाद्भङ्गं प्राप्य भीमसेने पराक्रमः शाणघृष्टनीलमणिरिव पुनरुद्दिदीपे महोदरान् स्थूलान् । इनः सूर्य आल्हादको यस्मात्तस्मात्सूर्यकान्ताद्भङ्गं प्राप्य नील इव यश इत्यादि यथा स्यादित्यपि कश्चित् ॥ ३४ ॥

अथेति । अथ अरिवधसंसिद्धकार्यः भूमात्यन्तं यथा स्यात्तथा पार्थोर्जुनश्च सुमित्रापुत्रो लक्ष्मणः शोभनमित्रानन्दजननश्च रविरिव तेजस्वी शत्रोः सिन्धुराजस्य समुद्राधिपतेरतिकायस्य सिन्धुकदेशपतेर्जयद्रथस्य च द्रुतगतिर्यथा स्यात्तथान्तिकं

विद्युल्लेखाविलिखितमिव व्योमसंदर्शयद्भि-
र्निर्विच्छेदप्रसरशलभश्रेणिशोभां वहद्भिः ॥
जज्ञे जन्यं सममथ तयोरर्धमार्गे फलानां
संघट्टौघद्धुतवहशिखालीढरूक्षं पृषत्कैः ॥ ३६ ॥
गगनातिविलं घनातिवेगाद्धरिचक्रेण तिरोहिते पतङ्गे ॥
रजनीमुखशङ्कया जजृम्भे निजकालागमसत्वरो विपक्षः ३७
ततो महन्मन्त्रवदस्त्रमुग्रं संधान संध्यामुखसीम्नि शत्रोः ॥
मूर्द्धानमुद्दिश्य समीकमूर्ध्नि प्रायोजि पृथ्वीश्वरसोदरेण ३८
अमुनाप्यसुरद्विषैव राहोः
क्षपिते मूर्ध्नि विहाय जीवलोकम् ॥
प्रचलन् गमितः कबन्धभावं
न भयं कस्य रणे करोति कायः ॥ ३९ ॥

प्राप । सूनोरिति पाठे सिन्धुराजो रावणो वृद्धक्षत्रश्च तत्सूनोरतिकायस्य जयद्रथस्य च ॥ ३९ ॥

विद्युदिति । 'समौ पतङ्गशलभावि'त्यमरः । जन्यं युद्धं । तयोर्लक्ष्मणातिकाययोरर्जुनजयद्रथयोश्च ॥ ३६ ॥

गगनेति । हरिचक्रेण कपिसमूहेन सुदर्शनेन च पतङ्गे सूर्ये । रजनीति । रक्षसां निशि बलाधिक्यात् जयद्रथमहत्वा रवेरस्ते अग्निं प्रवेक्ष्यामीति अर्जुनप्रतिज्ञानाच्च जृम्भणं उच्चोत्कर्षौ निःशङ्काविर्भावश्च निजकालः स्वपौरुषसमयो विनाशावसरश्च विपक्षोतिकायः सैन्धवश्च ॥ ३७ ॥

तत इति ॥ ततो पृथ्वीश्वरस्य रामस्य युधिष्ठिरस्य च सोदरेण भ्रात्रा लक्ष्मणेनार्जुनेन च महदस्त्रं ब्राह्मं महामन्त्रवदस्त्रान्तरं च 'समीकं सांपरायिकमि' त्यमरः ॥ ३८ ॥

अमुनेति । अमुना लक्ष्मणेन अतिकायस्य विष्णुना राहो·

तदाननेनोत्पतता तदानीमसृक्सृता चित्रकिरीटभासा ॥
व्यरोचताखण्डलचापरेखा सीमन्तितप्रान्तमिवान्तरिक्षम् ४०

कृत्तं लसत्कुण्डलमुत्तमाङ्गं
शत्रोर्विवेकात्कपिलक्ष्मणास्त्रैः ॥
रणक्षितेः पातितमङ्कदेशे
तेने पितुः प्राणभयं निजस्य ॥ ४१ ॥

तदनु चरणभूमेः खेचरैस्तूयमानः
प्रसभमवनिभर्त्तुः सोदरो निर्जगाम ॥
युधि समधिकधौतां कीर्त्तिमुद्धृत्य पृथ्वीं
प्रलयजलधिमध्याच्छ्रीवराहः पुरेव ॥ ४२ ॥

रिव मूर्ध्नि क्षपिते सति अतिकायः कस्य भयङ्करो न अपि तु सर्वस्य। पक्षे अर्जुनेन मूर्ध्नि छिन्ने जयद्रथकायः कस्य न भयं करोति श्रूयमाण इदानीमस्माकमपीति दर्शयितुं वर्त्तमानापदेशः । 'कबन्धोस्त्री क्रियायुक्तमपमूर्धकलेवरमि' त्यमरः ॥ ३९ ॥

तदिति । तदा अतिकायस्य सैन्धवस्य मुखेन सीमन्तः केशवेश इव सञ्जातोस्य ॥ ४० ॥

कृत्तेति । कृत्तं विवल्गतो विलसन्तः कपयो यद्यतथा स्यात्तथा लक्ष्मणस्यास्त्रैर्विवल्गत् समुच्चलत् शिरः । कपिलक्ष्मणा वानरध्वजेन जिष्णुना च रणक्षितेरङ्कदेशे पातितं रावणस्य मरणानुज्ञापकं भयं रणभूमेः सकाशात्समन्तपञ्चाद्बहिः तपस्यतो जयद्रथपितुः वृद्धक्षत्रस्याङ्के पातितम् ॥ तस्यापि नाशं च तेने ॥ ४१ ॥

तदिति । तदा राज्ञो रामस्य युधिष्ठिरस्य सोदरो लक्ष्मणोर्जुनश्च तदनन्तरं रणभूमेर्निर्जगाम । धौतां शुद्धां पृथ्वीं महतीं कीर्तिं उद्धृत्य प्रकृष्ट्याब्धिमध्याद्वराहो भूमिमुद्धृत्येव ॥ ४२ ॥

निशाकरेणेव वनेश्वरेण
प्रणीतभास्वज्जयमङ्गलक्ष्मीः ॥
रराज राजावरजो जनानां
मुदं वितन्वन्निव कामदेवः ॥ ४२ ॥

इति राघवपाण्डवीये महाकाव्ये नरान्तकादि-भूरिश्रवसवधो नाम दशमः सर्गः समाप्तः॥ १० ॥

---

## एकादशः सर्गः ।

अथ परिभवरोषात्प्रेषितास्तेन राज्ञा
रजनिचरचमूभिः सङ्गता सैन्यनाथाः ॥
त्वरिततरमरौत्सुर्धर्मराजस्य सेनां
भुवमिव तिमिराणां राशयो वासरान्ते ॥ १ ॥

निशाकरेणेति । निशा राज्ञा रामेण युधिष्ठिरेण च चन्द्रेणेव कृतशोभनजयमङ्गलसम्पत् । राज्ञो रामस्य युधिष्ठिरस्यावरजो लक्ष्मणोऽर्जुनश्च । कामः स्मरः काव्यप्रयोजकश्च ॥ ४२ ॥

आवश्यकपदश्लेषव्याचिख्यासावशात्मः ॥
लक्ष्मणस्य कृतौ सर्गो दशमः समपद्यत ॥ १० ॥

इति श्रीराघवपाण्डवीयमहाकाव्ये टीकायां नरान्तकादिभूरिश्रवसवधो नाम दशमः सर्गः समाप्तः ॥

—०○—

अथेति । अथ राज्ञा रावणेन दुर्योधनेन च रजनिचराः साधारणराक्षसाः हलायुधादयश्च धर्मराजस्य धर्मात्मनो राज्ञो रामस्य धर्म एव राजा युधिष्ठिरस्तस्य च ॥ १ ॥

व्यूहावुभौ संमुखतामुपेतौ
मिथो बलाङ्गानि बभञ्जतुस्तौ ॥
सद्यो जगन्तीव युगान्तकाले
पूर्वापरावम्बुनिधी प्रसक्तौ ॥ २ ॥
अविरलरणधूलिध्वान्तरुद्धेन्तरिक्षे
ज्वलति दशदिगन्ते तीव्रहेतिप्रदीपैः ॥
द्रुतकवलितरोदःकन्दरोदारधीरो
ध्वनिरजनि रणश्रीः सेनयोः संप्रवृत्तः ॥३॥
रणे रिपूणां बलभिद्विजेता
गुरुप्रभावाद्दृशदुर्निरीक्ष्यः ॥
महास्त्रधारानिकरैः प्रवीरा-
नपेतसंग्रामतृषश्चकार ॥ ४ ॥

व्यूहाविति । 'व्यूहस्तु बलविन्यास' इत्यमरः । जगन्ति भुवनानि ॥ २ ॥

अविरलेति । अविरलः सान्द्रः । अविरतेत्यपि पाठः । बलधूलीति च । 'रेणुर्द्वयोःस्त्रियां धूलिः पांसुर्नानद्वयोरज' इत्यमरः । 'रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयं' इत्यमरः। रणश्रीः संप्रवृत्ता अजनि प्रववृते । सप्तम्यन्तपाठो अन्तरिक्षे रुद्धे सति सेनयोः संप्रवृत्ते प्रवृत्तौ च सा रणश्रीरजनीति योज्यः । 'द्यावाभूमी च रोदसी' त्यमरः ॥ ३ ॥

रणेति । बलभिद इन्द्रस्य विजेता इन्द्रजित् रिपूणां रणे गुरोर्महतः प्रभावाद्दुःखेन निरीक्ष्य महास्त्रस्याभिचारिकहोमलब्धस्य धारासमूहैः प्रकृष्टवीरान् वानरान् विगतरणयुयुत्सांश्चक्रे । पक्षे गुरोर्भरद्वाजादेः प्रभावाद्दुर्निरीक्ष्यः युधि वैरिबलानां भेत्ता विनेता सेनापतिर्द्रोणः महास्त्राणां धारानिकरै-

भिन्नाङ्गदं त्रस्तबलाधिनाथं
भ्राम्यद्गजं विह्वलदश्विपुत्रम् ॥
अभीमसंरम्भमनेन भग्नं
रराज नाजौ नरदेवसैन्यम् ॥ ५ ॥
तदा तदीये ज्वलति प्रभावे
ज्ञात्वा महो ब्राह्ममभेद्यमन्यैः ॥
विष्णोर्जगत्क्षेमकरोवतारः
स्वपक्षपीडां कथमप्य सोढा ॥ ६ ॥

रविच्छिन्नपातैः । पिपासा हि धाराजलैः शाम्यति ॥ ४ ॥

भिन्नेति । अङ्गदो वालिसुतो केयूरं बलाधिनाथः सुग्रीवो धृष्टद्युम्नश्च । गजः कपिभेदः करी च । विह्वलन्तावाश्विपुत्रौ मैन्दद्विविदौ माद्रेयौ च यत्र । विह्वलशब्दादाचाराक्विन्ताच्छतारि रूपम् । भीमो भयङ्करो वानरभेद इति कश्चित् वृकोदरश्च । तदुभयमरहितम् । अनेन इन्द्राजिता द्रोणेन च भग्नं पराजितं नरदेवस्य रामस्य युधिष्ठिरस्य च सैन्यमाजौ सङ्ग्रामे न शुशुभे । स्त्रियः संयत्समित्याजिसमिद्युधः' इत्यमरः ॥ ५ ॥

तदेति । तदीये तस्येन्द्रजितः द्रोणस्य च । ब्राह्मं ब्रह्मसंबन्धि । विष्णोरवतारो रामः कृष्णश्च । स्वस्य पक्षाणां सहायानां स्वकीयपक्षयेति च पीडां सर्वसैन्यसादरूपां अविच्छिन्नवेधजन्यां च कथमपि केनापि प्रकारेण असोढा न सेहे । अ इति स्वरप्रतिरूपकमव्ययं । सम्बोधनाधिक्षेपनिषेधार्थकं तेनाधिक्षेपकरूपां पीडां सोढवानिति वा । 'तीषसहे'ति विकल्पादिडभावेढत्वधत्वष्टुत्वढलोपाः । 'नलोकव्यये'ति तद्योगे षष्ठी निषेधात्पीडामिति द्वितीया' ॥ असोढ इति पाठस्तु प्रमादिकः ॥ असहिष्टेत्यापत्तेः अत एव भट्टिद्योते 'सो तत्रासन्प्रासहिष्टारि'ति । 'आवोढेति वा पाठ्यं पीडां च क्षमे'त्यर्थः ॥ ६ ॥

धीरेषु वैरात्परचक्रमध्यं
विशत्सु नालोचत युद्धकालम् ॥
ततः क्षपायुद्धमवर्त्ततोल्का-
करालदीपक्षपितान्धकरम् ॥ ७ ॥
तत्रातिमात्रं रविनन्दनस्य
तेजो दिदीपे परवाहिनीषु ॥
निषिद्धनासत्यसुतोद्यमस्य
रक्षोवधाय स्वयमुद्यतस्य ॥ ८ ॥
तमभ्यधावत्क्षतशत्रुरक्षो
घटोत्कचस्फीतविटङ्कमौलिः ॥
चलाचलाकारकरीन्द्रपङ्क्ती-
कुम्भप्रभिन्नाम्बुदसंहतिश्रीः ॥ ९ ॥

"स्वशेति। हरेर्वायोरिन्द्रस्य च कुमारो हनूमानर्जुनश्च स्वशक्तिजृम्भाभिरिव औषधीभिः स्वाहृतौषधिपर्वतोद्गताभिः औषधीभिरिव स्वशक्तिजृम्भाभिश्च राज्ञो रामस्य युधिष्ठिरस्य च बलं सैन्यम् । (?)" धीरेति । अपरामृष्टसमं यया स्यात्तथा उल्कारूपास्तत्सदृशाश्च दीपाः ॥ ७ ॥

तत्रेति । रात्रियुद्धे रविनन्दनस्य कर्णस्य च अतिमात्रं यथा स्यात् नासत्यसुतौ मैन्दद्विविदौ माद्रेयौ च । रक्षः कुम्भो घटोत्कचश्च ॥ ८ ॥

तमिति । सुग्रीवं कर्णं च क्षतशत्रु यथास्यात्तथा निरस्तवैरिरक्षणश्च ऊर्ध्वकचस्फीतमुकुटमस्तका रक्षोघटा रक्षः राक्षसो मुकुटेति मस्ते घटोत्कचश्च 'शर्परिखरीति' विसर्गलोपे वा । विटङ्कः किरीट इत्येव क्वचित्पाठः चलत्पर्वताकारकरीन्द्रपङ्क्तिः युक्ता कुम्भेन कुम्भकर्णपुत्रेण प्रेरिता मेघसंघातश्यामला रक्षो-

भ्रान्तान्तर्गिरिनक्रचक्रमचिरादुद्गीर्णितैरर्णवै-
राघ्राताहितजीवितैः प्रहरणैराक्रान्तरोदोन्तरम् ॥
ध्वस्तध्वान्तविरिञ्चिलोकमपुनर्व्यावृत्तिनिष्ठैर्भटै-
र्गीर्वाणा ददृशुः सविस्मयधियो दुर्वृत्तयोः संगरम् १०
ताभ्यामन्योन्यसैन्ये समरभुवि मुहुर्मथ्यमाने महास्त्रैः
सद्यो भारावतारात्क्षितिरतिसुभराभोगिभर्तुर्बभूव ॥
वीरैर्द्वाराणि भग्नान्यहमहमिकया गाहमानैः समन्ता-
द्द्राक्रान्तोद्यानहर्म्यस्थलमणिभवना द्यौर्ननामातिभारात् ११

चरन्धरित्र्यामथ तूर्णमम्बरे
पुरोथ पश्चादपि पार्श्वयोर्द्वयोः ॥
बलानि भिन्दन् बहुहेतिसंचयै-
र्न राक्षसेन्द्रो निरवीयतापरैः ॥ १२ ॥
तदनु रविसुतेन प्रस्फुरच्छक्तिनोच्चै-
र्वृहदवयवभारैः क्षुण्णदिग्दन्तिकुम्भः ॥

घटाचलेत्यादिविशिष्टो घटोत्कचश्च तेन हि मायागजाः दृष्टाः
'कुम्भौ तु पिण्डौ शिरसः' इत्यमरः ॥९ ॥

भ्रान्तेति । द्यावाभूमी च रोदसीतयोरन्तरं मध्यं । गृहमित्य-
पि पाठः । विरिञ्चीत्यत्र सुरेन्द्रेति च तयोः सुग्रीवकुम्भयोः क-
र्णहैडिम्बयोश्च ॥ १० ॥

ताभ्यामिति । सुग्रीवकुम्भाभ्यां कर्णघटोत्कचाभ्यां च वै-
राणि मरणान्तानि द्वाराणीत्यपि पाठः स्वर्गगोपुराणीत्यर्थः ।
'अहमहमिका तु सा स्यात्परस्परं यो भवत्यहङ्कार' इत्यमरः ।
द्यौः स्वर्गलोकः ॥ ११ ॥

चरन्निति । राक्षसेन्द्रो कुम्भः हैडिम्बश्च अपरैः सुग्रीवादि-
भिः कर्णादिभिश्च ॥ १२ ॥

रजनिचरचमूपः संयुगान्ते युगान्ते
गिरिरिव पवनेन क्ष्मातले पातितोभूत् ॥ १३ ॥
तस्मिंस्तदोपेयुषि दीर्घनिद्रं बभूव शोकाकुलितः स्वपक्षः ॥
विरोधिवर्गः सुतरां जहर्ष नकोपि सर्वप्रियतामुपैति॥१४॥
तदनु किल निकुम्भः कोष्ठशूलं यथोग्रं
निधिमिव सलिलानामुद्यतं कुम्भजन्मा ॥
रणभुवि परसैन्यं शून्यतामाशुनिन्ये
भुवनदहनदाहारम्भतीव्रास्त्रतेजाः ॥ १५ ॥
बाणार्णवौघैर्ग्रसितेषु भूयो
नीतेषु नाकं बलनायकेषु ॥
युधः पलायन्त युधिष्ठिरस्य
सैन्यानि कुम्भोद्भवभीतियोगात् ॥ १६ ॥

तदिति । रविसुतेन सुग्रीवेण कर्णेन च प्रस्फुरन्ती शक्तिः पराक्रमो यस्य शरीरनिमग्नत्वाद्बहिर्लक्ष्यमाणैकदेशा शक्तिः इन्द्रदत्ता यस्मिन् स च क्षुण्णाः कृताघाताः दिग्दन्तिनो यत्र तद्यथा स्यात् कुम्भः कौम्भकर्णिः तदिग्गजकुम्भस्थलो हैडिम्बश्च परस्य स युगान्ते मलयानिलेन पर्वत इव पातितः ॥ १३ ॥

तस्मिन्निति । कुम्भहैडिम्बे च दीर्घ निद्रां मरणं स्वस्य पक्षो रावणादिर्युधिष्ठिरादिश्च । विरोधिनां च समूहः ॥ १४ ॥

तदन्विति । अनन्तरं निकुम्भो कुम्भभ्राता दन्त्याख्यं विरेचनद्रव्यं कोष्ठशूलमिवेति कुम्भपदावृत्त्या योज्यम् । 'निकुम्भः कुम्भकर्णस्य तनयेदन्तिकौषधाविति' मेदिनी । पक्षे कुम्भजन्मा द्रोणः आवृत्या अगस्त्यः सलिलराशिमिवेति योज्यम् १९

बाणेति युधः युद्धात् स्थिरस्य रामस्य धर्मराजस्य च निकुम्भभयात् सैन्यानि कुम्भोद्भवस्य द्रोणस्य भयात्सैन्यानि च ।

ततः कुमारव्यसनश्रवस्त-
रोर्विदित्वा सुकरं निपातम् ॥
हरिर्मरुन्नन्दन उद्यतात्मा
समादधे तन्निधनाय यत्नम् ॥ १७ ॥

कृतास्त्रसन्तानविघातवार्ता-
मनीश्वरः सोढुमसौ समन्युः ॥
प्राणच्छिदः शत्रुबलस्य मध्ये
नेता बलानां विससर्ज हेतिम् ॥ १८ ॥

धृष्टद्युम्नः सपदि पवमानोद्भवस्तीव्रकर्मा
निर्मुक्तास्त्रप्रकरमभितस्तं सहैवाभिपत्य ॥
कुर्वन् कायात्पृथगिव शिरः कौरवान् क्षोभयित्वा
संग्रामाग्रे त्रिदिवपदवीपान्थमेनं व्यधत्त ॥ १९ ॥

'सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते' इत्यमरः ॥१६॥

तत इति । कुमारस्य निकुम्भस्य व्यसनं मरणं तदुग्रवार्तामेव तद्गुरोः रावणस्यासुकरं निपातं विदित्वा मारुतिः वानरो हनूमानुद्यतात्मा सावधानः । निकुम्भनाशाय यत्नं चक्रे । पक्षे अश्वत्थामा मृत्युवार्त्तामेव द्रोणमरणोपायमवधार्य देवानामानन्दजनकः कृष्णः उद्यतात्मा तदेकचित्तः तस्य द्रोणस्य निधनाय तत्कर्तुं तदनुकूलं यत्नमकरोत् 'क्रियार्थे'ति चतुर्थी । व्यसनश्रवतद्गुरोरिति पाठे श्रवः श्रवणम् ॥ १७ ॥

कृतेति । कृता प्रयुक्तास्त्रपरम्परा विज्ञातवार्तामपि सोढुमक्षमोऽतएव क्रुद्धः सैन्याध्यक्षो निकुम्भः शत्रुबलोपरि आयुधं विससर्ज चिक्षेप शिक्षितास्त्रस्य सन्तानस्याश्वत्थाम्नो विघातस्य मृत्योर्वार्त्तां युधिष्ठिरमुखोद्गतां मन्युः शोकः नेता द्रोणः वैरिसैन्यमध्ये स्थितः शस्त्रं तत्याज ॥ १८ ॥

धृष्टद्युम्नेति । दृढपराक्रमः द्रुपदपुत्रश्च पवमानोद्भवो हनूमान्

सा युद्धधीरापि निरस्तधैर्या
विभ्रष्टनानायुधयोधवाहा ॥
दशैव पुंसां प्रतिकूलदैवान्
सेना परेषामभवत्पराचीः ॥ २१ ॥

पितुर्निपातादनुबद्धवैरः पत्युर्बलानां तनयः खरस्य ॥
रोषेण मूर्च्छन्मकराक्षउच्चैर्युगक्षये वार्धिरिवोच्चचाल २२

अभीतिभाजा विहिताभियोग-
स्तेन क्षणात्क्षोणिपतेर्बलौघः ॥
नारायणास्त्राभिहतो बभूव
राहोरधः काय इवापचेष्टः ॥ २३ ॥

तदुन्मुक्तनिराबाधबाणवाडववह्निभिः ॥
क्षोणीपालबलाम्भोधिः क्षणात्क्षयमनीयत ॥ २४ ॥

न् पवमानो वायुर्वह्निश्च निर्मुक्तो वैरिषु क्षिप्तः शोकात्त्यक्तश्च । वैरं वीरभावः पितृनिग्रहादिमूलकविरोधश्च । कौ पृथिव्यां रवान् शब्दान् कुरुवंशान् धार्तराष्ट्रांश्च । एनं निकुम्भं द्रोणं च । भारतपक्षे पवमान इव उद्भवतीति पवमानोद्भवो वायुवदाकस्मिकसंक्रम इति ॥ १९ ॥ २० ॥

सेति । पराची पराङ्मुखा ॥ २१ ॥

पितुरिति । खरस्य रावणभ्रातुः तीव्रस्य च तनयो वक्ष्यमाणोश्वत्थामा च । रोषेण मूर्च्छोक्तक्रोधाविष्टः मकराक्षनामा क्रोधेन मूर्च्छन्मत्स्यसदृशो वृत्ताक्षश्च । वार्धिरब्धिः । उच्चचाल अभिनिर्ययौ ॥ २२ ॥

अभीतीति । तेन मकराक्षेणाश्वत्थाम्ना चाभियुक्तः क्षोणिपतेः रामस्य युधिष्ठिरस्य च नारायणस्यास्त्रेण सुदर्शनेनाभिहतो राहोरधः काय इवापरगतचेष्टोभूत् । पक्षे अश्वत्थामप्रयुक्तनारायणास्त्राभ्याहतः सुदर्शनेन राहुकाय इव ॥ २३ ॥

मुक्तायुधमहायोधा सम्भ्रान्तपवनात्मजा ॥
रामावरजवाचा सा पर्यवस्थापिता चमूः ॥ २५ ॥

श्रीकण्ठकण्ठमचिरादिव कालकूटः
पूर्वं पयोधिमिव मौर्वमुनेः प्रकोपः ॥
आसाद्य मानवतनुं पुरुषं पुराणं
तस्य प्रतापमहिमा प्रशशाम शत्रोः ॥ २६ ॥

प्रतापमाग्नेयमिवास्त्रमस्य रुध्द्वा जितारिं नरदेवपुत्रम् ॥
तं वीरलक्ष्मीर्जुषते स्म नक्तं शृगारलक्ष्मीरिव कामदेवम् २७

इतिराघवपाण्डवीयेकाव्ये मकराश्वत्थामादिवधो नामैकादशः सर्गः ॥

तदुन्मुक्तेति । मकराक्षेणाश्वत्थाम्ना चोन्मुक्ताः । क्षोणिपालो रामो युधिष्ठिरश्च ॥ २४ ॥

मुक्तेति । पवनात्मजो हनूमान् । रामस्यावरं जायते इत्थं वरजो निकृष्टजातिर्मकराक्षस्तस्य च वाचा परस्परसंघर्षगिरा ; मुक्तानि शत्रूपरिक्षिप्तानि आयुधानि यैस्तैः । राममकराक्षयोः परस्परजिगीषावचनश्रवणेनाभयापि सेना सावष्टम्भा बभूवेति भावः ॥ पक्षे मुक्तानि कृष्णवचनदूरीकृतानि आयुधानि यैस्तादृशयोधवती । संभ्रान्तः सोद्वेगो भीमसेनो यस्यां सा युधिष्ठिरचमूः नारायणास्त्रस्य प्रतियातार्थमुपायान्तरमपश्यतः कृष्णस्य वाचा शस्त्रत्यागविधायिन्युज्जीविता ॥ २५ ॥

श्रीकण्ठेति ॥ तस्य मकराक्षस्य अश्वत्थाम्नश्च पुराणपुरुषं विष्णुं मानवतनुं रामं कृष्णं च प्राप्य शशाम मकरो मृतोऽश्वत्थामाऽस्त्रवैय्यर्थ्याद्विरतः ॥ २६ ॥

प्रतापेति । प्रतापाग्नेयास्त्रमिव प्रतापन्तमिवाग्नेयास्त्रं च रु-

# द्वादशः सर्गः

अथ गोप्तारमङ्गानां जिष्णोर्जेतारमाहवे ॥
संभाव्योद्योजयामास स दशास्यो जनेश्वरः ॥ १ ॥

सशक्रचापच्छवि मेघनादो
धुन्वन् धनुर्ज्याशरसंगिकर्णः ॥
रणाय भर्त्तुर्जयकारणाय
जवेन जैत्रं रथमारुरोह ॥ २ ॥

उत्सर्पत्कलकलघोषभीषणाभि-
र्व्यालोलध्वजपटलीढदिक्तटाभिः ॥

द्ध्वा निरुध्य अस्त्रेणाभिभूय जितो हतः पराभूतश्च अरिमंकरा-
क्षोश्वत्थामा च येन तं नरदेवपुत्रं राममर्जुनं च। जुषते स्म सि-
षेवे। जुषीप्रीतिसेवनयोः। कामदेवः स्मरः। काव्यप्रयोजकश्च २७

आवश्यकपदश्लेषव्याचिख्यासावशात्मनः ॥
लक्ष्मणस्य कृतौ सर्गः सोयमेकादशोगमत् ॥

इति राघवपाण्डवीये काव्ये टीकायामेकादशः
सर्गः समाप्तः ॥ ११ ॥

—००—

अथेति ॥ अङ्गानां हस्त्यादीनां देशविशेषाणां च गोप्तारमि-
न्द्रजितं कर्णं च जिष्णोर्जित्वरस्य रामस्यार्जुनस्य च जेतारमिति
सम्भाव्य सम्भावनाविषयं विधायाभिषेकादिना सत्कृत्य स
प्रसिद्धो दशाननो रावणः सतामशासनीयः सुयोधनश्च ॥ १॥

सशक्रेति। स मेघनादः इन्द्रजित् शक्रचापच्छवि इन्द्रधनुःस-
दृशं तद्युक्तियुक्तं मेघसमगर्जितश्च धनुर्धुन्वन् विस्फारयन् ज्या-
शरसङ्गी कर्णोऽस्य ज्याशरसङ्गि धनुः धुन्वन् राधेयश्च। भर्त्तुः
पितुः दुर्योधनस्य च ॥ २ ॥

संग्रामप्रमदभरादसंभ्रमाभि-
वीराणामथ समनाहि वाहिनीभिः ॥ ३ ॥

समिद्धराधेयभुजप्रतापे द्विषद्बले दृग्विषयं प्रपन्ने ॥
चमूभृता वह्निभवेन गुप्ता नरेन्द्रसेना त्वरते स्म योद्धुम् ४

रभसवलितनानाहेतिवालप्रवाले
प्रतिमुखमपनीते मृत्युना मन्युना च ।
द्रुतमिव वनराजीनिर्गते निम्नगेव
रणभुवि जघटाते ते उभे राजसेने ॥ ५ ॥

आहूताऽमरलोकवारवनितं दिग्व्यापि भेरीरवै-
र्दूरात्कृष्टकबन्धमात्स्यमचिरात्सान्द्रैरसृक्सिन्धुभिः ॥
संबाधीकृतनाकनायकपुरं संशप्तकश्रेणिभि-
र्दन्तादन्ति कचाकचि द्रुतमभूद्युद्धं तलातल्यपि ॥ ६॥
उत्सर्पदिति समनाहि सन्नद्धम् ॥ ३ ॥

समिद्धेति । संग्रामभूमावाधेय आधातुं स्थिरीकर्तुं योग्यो भुजप्रतापो यस्य तस्य प्रदीप्तकर्णदोर्विक्रमवति च । द्विषतो रावणस्य दुर्योधनस्य च । वह्निभवेन नीलेन धृष्टद्युम्नेन च । नरेन्द्रो रामो युधिष्ठिरश्च ॥ ४ ॥

रभसेति । उभे राज्ञो रामरावणयोर्युधिष्टिरसुयोधनयोश्च सेने जघटाते सम्बद्धे बभूवतुः वनराजीनिर्गते नद्याविव वनसम्बधात्तयोः प्रवालवेगः । प्रतिमुखमभिमुखम् ॥ ५ ॥

आहूतेति । प्रथमान्तानि युद्धविशेषणानि । स्ववेंश्या उर्वशीमुखाः। सिन्धुभिः समुद्रैः । 'सिन्धुः समुद्रे नद्यां च नदभेदानयो'- रि'ति विश्वः।'सम्बाधा सङ्कटे भये'इति च । दन्तैश्च दन्तैश्च प्रहृत्येदं युद्धं प्रवृत्तं दन्तादन्ति। एवं कचेषु कचेषु गृहीत्वा कचाकचि । तलैश्च तलैश्च प्रहृत्य तलातलि । 'तत्र तेनेदमि'ति बहुव्री-

विधाय निष्पन्दमिवारिवृन्दं
स तीव्रधामप्रभवः प्रतापैः ॥
विवेश वीरः स्वनिवेशभूमिं
द्वीपान्तरं सूर्य इवोपसंध्यम् ॥ ७ ॥
प्रगे सहस्रांशुरिवोज्ज्वलप्रभः
सवेगसज्जीकृतभीमकार्मुकः ॥
रथेन भूयः समराय निर्ययौ
विपक्षवाञ्छाऽनुगशल्यसारथिः ॥ ८ ॥

हिः। 'इच्कर्मे'ति इच् । 'अन्येषामपी'ति पूर्वपदान्तस्य दीर्घः । 'तिष्ठद्गुप्रे'ति इचः पाठादव्ययत्वं । तलं चपेटः ॥ ६ ॥

विधायेति । तीव्रधामा रावणः सूर्यश्च प्रभव उत्पादको यस्य सः इन्द्रजित्कर्णश्च । अरिवृन्दं रामादि युधिष्ठिरादि च । निष्पन्दं निश्चेष्टं स्वस्येन्द्रजितो निवेशभूमिराभिचारिकस्थलं निकुम्भिलाख्यो वटः । उपसंध्यं समीपे । तीव्रस्य तेजसः प्रभावः अरिवृन्दं मन्देहादिराक्षसगणं प्रकृष्टैस्तापैर्द्वीपान्तरं जम्बुद्वीपादन्यत् रविरिव । पक्षे संध्यासमये निवेशः शिबिरं 'निवेशः पुंसि विन्यासे शिबिरोद्वाहयोरपी'ति विश्वः ॥ ७ ॥

प्रगे इति ॥ स इन्द्रजित् सहस्रांशुः प्रातस्तनः सूर्य इव विपक्षं वाञ्छत इति विपक्षवाञ्छा अनुगाः । शल्यानि शराः सारथिश्च यस्य रथेन हवमाश्रितो निर्गतेन 'शल्यः शत्रौ शरे वंशे कविकायां च तोमरे' इति विश्वः । पक्षे स कर्णः प्रातः पुनर्योद्धुमाययौ । विरोधिनो युधिष्ठिरस्य वाञ्छानुवर्ती तत्प्रार्थितकर्णतेजोपचयकारी शल्यो मद्राधिपः सारथिर्यन्ता यस्य ॥ ८ ॥

निर्यतीषु परितो वरूथिनीष्वाहवाय परिपाकदारुणः ॥
श्रूयतेस्म चकितैश्चभूचरैः कर्णशल्यपरुषोक्तविस्तरः ९

अनुकूलजुषासोऽथ वीरः सारथिना परः ॥
अंशुमानरुणेनेव नीयमानरथो बभौ ॥ १० ॥

दिग्भित्तिप्रविघटनोद्भटमहाघोषैर्जगद्भीषय-
न्बाणासारसृजा धनुर्जलमुचा तन्वन्नसृक्निम्नगाः ॥
नानावीरविमर्दनार्तितभुजाकण्डूविनोदक्षणा-
दभ्यर्णं प्रलयार्णवप्रतिनिधिः पृथ्वीपतेः प्राप सः ॥११॥

कुर्वाणौ बाणवर्षौ वियति दिविषदां स्वैरयात्राङ्गरूपं
हुंकारैः कर्षयन्तौ बहलमदनदीनिर्गमं दिग्गजानाम् ॥
सद्यः प्रत्यर्थिवर्गैरपि गुणविवशैः स्तूयमानप्रकर्षौ
प्रायुध्येतां प्रवीरौ सुभटजनदृशां लक्ष्यभूतावुभौ तौ १२

स वाक्शरैराहितमर्मघट्टनश्चकार पीडां महतीं महीपतेः॥
क्षणेन सीताक्षपणव्यलीकतः कृषीवलस्येव महानवग्रहः१३

निर्यतीष्विति । आहवाय । कर्णशल्यः श्रोत्रकटुः कलहाय-मानराधेयमद्रेशसम्बन्धी च ॥ ९ ॥

अनुकूलेति । चित्तानुवर्तिना । स मेघनादः। पक्षे । अथ कलहानन्तरं अनुकूलेन शल्येन ॥ १० ॥

दिग्भित्तीति । धारासंपात आसारः। प्रतिनिधिस्तुल्यः । पृथ्वीपतेः रामस्य युधिष्ठिरस्य च । सः इन्द्रजित्कर्णश्च ॥ ११ ॥

कुर्वाणाविति ॥ उभौ रामेन्द्रजितौ युधिष्ठिरकर्णौ च । सुभटैः प्रतिवीरौ वीक्ष्यमाणौ ॥ १२ ॥

सवागिति । स इन्द्रजित् वाग्भिः शरैश्च मर्माण्यावेध्यान्यवाच्यानि च महीपतेः रामस्य क्षणेनाल्पकालेन सीतायाः मायानिर्मितायाः क्षपणं वधः तद्रूपादप्रियात्कर्षकस्य लाङ्गलपद्धतिः

नैर्घृण्यात्सव्यथं शत्रोर्नरदेवमुपस्थितम् ॥
तद्गिराफल्गुनोप्याप भ्राता चित्तस्य विक्रियाम् १४
कृतानुरोषयोरन्तःप्रतियोगिविभीषणः ॥
अपनिन्ये तयोः कृष्णः कार्यज्ञो मन्युमूर्च्छनम् १५

शोषणाद्वृष्टिप्रतिबन्ध इव ' सीतालाङ्गलपद्धतिरि ' त्यमरः । पक्षे स कर्णः युधिष्ठिरस्य पीडां वाग्मी बाणैः कृतमर्मघट्टन इति कश्चित् ॥ १३ ॥

नैर्घृण्यादिति ॥ शत्रोरिन्द्रजितो नैर्घृण्यात्सीतावधरूपात् सव्यथं राममुपस्थितः । तद्गिरा सीता हतेति वाचा अफल्गुनः अतुच्छस्यापि चित्तस्य वैकल्पं लक्ष्मणः प्राप मायामात्रतयालीकानैर्घृण्यादिति वा । पक्षे कर्णकृतनिर्भर्त्सनाद्व्यथितं युधिष्ठिरमुपस्थितोऽर्जुनः कर्णमहत्वैव प्रत्यागतस्य 'वृथा गाण्डीवमन्यस्मै देही'ति तद्वाचा चित्तविकारं युधिष्ठिरावद्योक्तिपर्यन्तं प्राप । फल्गुशब्दा 'त्तत्र जात'इत्यणः 'श्रविष्ठाफल्गुनी'त्यादिनालुकि 'लुक्तद्धितलुकी'ति' स्त्रीप्रत्ययविवृतौ फल्गुन इति । 'अर्जुनः फाल्गुनो जिष्णु'रित्यादौ । अस्मादेव स्वार्थिकः प्रज्ञाद्यण्॥१४॥

कृतानुताप इति । कृतानुतापयोर्धृतदीर्घेजिद्वेषयोः तयोर्दाशरथ्योः अन्तःप्रतियोगि मनोविघातकं । मन्युना शोकेन मूर्छनं मोहं । कृषति दूरीकरोति दुःखमिति कृष्णःश्यामवर्ण इति कश्चित् । कार्यमिन्द्रजितो मायासीतावधं संग्राममावश्यकं च तदभिज्ञो विभीषणो अपनिन्ये । पक्षे अर्धजातपश्चात्तापयोर्युधिष्ठिरार्जुनयोः प्रतियोगिनां विरोधिनां भयङ्करः प्रस्तुताऽवश्यककार्यज्ञश्च कृष्णो हरिः क्रोधोच्छ्रायमपाचकार । 'अथाऽनुशयो दीर्घद्वेषानुतापयो'रित्यमरः ॥ १५ ॥

धृतप्रसादेन ततो नृपेण वधाय शत्रोः प्रहितः कनीयान् ॥
बलेन सार्धं महता बलीयान् रोद्धुं द्विषामुद्यममुद्यतोऽभूत् १६

अतुलबलहनूमत्कल्पितस्यन्दनश्री-
र्दवदहनइवाऽसौ वैरिकक्षं विगाह्य ॥
प्रतिहतवृषसेनाडम्बरव्यूहमेनं
प्रसभमकृतबाह्वोर्वीक्षमाणां निकाषम् ॥१७॥

अत्रान्तरे पार्ष्णिममुष्य गृह्णन्
विभीषणः संयति भीमसेनः ॥
दुःशासनं वैरिबलं प्रमथ्य
बलेन बाह्वोर्यमसाच्चकार ॥ १८ ॥

धृतेति। नृपेण रामेण युधिष्ठिरेण च शत्रोरिन्द्रजितः कर्णस्य च कनीयान् लक्ष्मणोऽर्जुनश्च द्विषामिन्द्रजिदादीनां च उद्यमं निकुम्भिलायामभिचारिकाऽनुष्ठानमभिषेणनं च ॥ १६ ॥

अतुलेति। हनुमदारूढो ध्वजीभूततत्कृतरथशोभश्च प्रतिहतो वृष्णः इन्द्रस्यसेनायाः आडम्बरः समारम्भो येन तं। प्रतिहतवृषया निर्धूतधर्मया सेनया आडम्बरो यस्येति वा। वृषसेनाख्यकर्णपुत्रस्य स्वयं निहतत्वाद्दूरीकृततदाडम्बरं च। एनं प्रतिबद्धनिकुम्भिलाप्राप्तमिन्द्रजितं सुतशोकवन्तं कर्णं च। निकाषो निकषोपलः परीक्षास्थानमित्यर्थः 'आडम्बरः समारम्भो गजगर्जिततूर्ययोरि'ति विश्वः ॥ १७ ॥

अत्रेति। रणे भीमा सेना यस्य स विभीषणः पौलस्त्यः अत्रान्तरे अस्मिन्नवसरे अमुष्य लक्ष्मणस्य पार्ष्णिं पश्चाद्भागं पूरयन्। दुःशासनं दुःखेन शासनीयं वैरिसैन्यं यमाधीनं यमसादकरोत्। 'देये त्रा चे'ति सातिः। पक्षे रणे भयंकरो भीमसेनोऽर्जुनस्य पार्ष्णिग्रहो भूत्वा दुःशासनं दुर्योधनानुजं जघान 'पार्ष्णि

अरातिरक्तक्षरणातिरौद्रं
भ्राम्यद्गदाभीषणबाहुदण्डम् ।
तथा तमालोक्य रणे चरन्तं
साक्षात्कृतान्तं मनुते स्म लोकः ॥ १९ ॥

तद्वैभीषणमालोक्य रणकर्म महाजनः ॥
राजदारोपरोधस्य फलं प्राप्तममन्यत ॥ २० ॥

तदासौमित्रिणा बाणैर्जिष्णुना विरथीकृतः ॥
अङ्गानामीश्वरः क्षुभ्यन् मेघनादो रुषं दधौ ॥ २१ ॥

बलभारनिरन्तरा धरित्री
गगनं निर्विवरं च दिव्यलोकैः ॥
रजसा पिहितं तदन्तरालं
न विभागो निरणीयत त्रिलोक्याः ॥ २२ ॥

पाश्चात्यभागे स्यात्पादे मूलोन्मदस्त्रियोः । सेनापृष्ठे च कुन्त्यां चे ' ति विश्वः ॥ १८ ॥

अरातीति । तं विभीषणं भीमं च अरातीनां राक्षसां वैरिणो दुःशासनस्य च । रक्तक्षरणेन रौद्रं यथा स्यात्तथा रक्तप्रधारणोग्रकर्माणं च ॥ १९ ॥

तद्वै इति । तत् तद्रणकर्म पराक्रमं रणकर्म दुःशासनरक्तपानं च । विभीषणसम्बन्धि वै पादपूरणे भयंकरं च । राजदाराणां सीताया द्रौपद्याश्च उपरोधो निग्रहः केशाम्बराकर्षणं च ॥ २० ॥

तदेति । सुमित्रापत्यं सौमित्रिर्लक्ष्मणस्तेन जयशीलेन विरथीकृतः सेनाङ्गानामीश्वरः मेघनाद इन्द्रजित् क्षुभ्यन्सञ्चलन् चुक्रोध । पक्षे असावङ्गानां देशविशेषाणामीश्वरो मित्रिणा मित्रसंपन्नेन जिष्णुना ऽर्जुनेन क्षुभ्यन् । घनसमध्वनिः ॥ २१ ॥

बलेमिति । तयोर्भूगगनयोरन्तरालं मध्यं लोकैः त्रैलोक्यस्य पृथक्त्वं निर्णेतुं नाशक्यत ॥ २२ ॥

प्रथममतनुभिस्तौ जघ्नतुः सिंहनादैः
परमपि च महोल्काक्षेपरूपैः कटाक्षैः ॥
अथ च वचनबाणैर्मर्मभेदप्रवीणै-
स्तदनुदलितकायैः सायकानां निकायैः ॥ २३ ॥

नभश्चरैर्मार्गणपातभीतैर-
भ्यर्णमुत्सृज्य विलोकयद्भिः ॥
सविस्मयं व्याहृतसाधुवादं
तयोः समानं समरं बभूव ॥ २४ ॥

निर्भिन्नधाराधरगर्भनिर्य-
त्कीलालकुल्योक्षितभूमिभागाः ॥
दूरं चरन्तो विशिखास्तदीया-
दिशां शिरोवेधमिवान्वतिष्ठन् ॥ २५ ॥

दृष्टानेकपुराणवीरसमरश्रीभिः समं खेचरैः
प्रारब्धस्तुति नारदेन मुनिना निर्णीयमानान्तरम् ॥
भेरीध्वानभवद्भयाश्रितमहादिक्कुञ्जदिक्कुञ्जरं
युद्धं वर्धितपक्षपातमुभयोः प्रैक्षन्त देवासुराः ॥२६॥

विरचितमरिणा हि क्रूरबाणप्रयोक्त्रा
सहचरहरिशक्तिव्याहताराऽतिवाञ्छः ॥

प्रथममिति । तौ इन्द्रजिल्लक्ष्मणौ कर्णार्जुनौ च ॥ २३ ॥

नभइति । 'अस्त्रियां समरानीकरणा' इत्यमरः ॥ २४ ॥

निर्भिन्नेति । तदीयाः लक्ष्मणस्येन्द्रजितश्च शराः ॥ २५ ॥

दृष्टेति । नारदः कलिप्रियः । अन्तरं विशेषः । उभयोर्लक्ष्मणे-न्द्रजितोरर्जुनकर्णयोश्च । देवासुराइति । शाश्वतिकविरोधाभावान्न समाहारः । कार्यापेक्षं येषां वैरं । 'देवासुरैरमृतमम्बुनिधिर्ममन्थ' इति भारविः ॥ २६ ॥

रणभुवि नृपसूनुर्मौलिरत्नापहारं
भुजगइव न सेहे स्तोकमप्याशु भङ्गम् ॥ २७ ॥

आशुरोषवशवर्तिनाऽमुना
ज्यानिनादकृततीर्थभर्त्सना: ॥
प्रत्यराति विशिखाः प्रतेनिरे
कर्णकुण्डलविघट्टनोत्कटाः ॥ २८ ॥

ग्रस्तचक्रस्य धरया निस्तीर्णस्यन्दनापदः ॥
रणकर्म महच्छत्रोर्नासोढा नरदेवजः ॥ २९ ॥

विरचितेति। अरिणा इन्द्रजिता हि स्फुटं क्रूरयमदत्तबाणप्रयोक्ता सदृशः क्रूरेति वा हरयः वानराः 'वाञ्छा लिप्सा मनोरथ' इत्यमरः नृपसूनुर्लक्ष्मणः भङ्गं न ममृषे। सर्पो मौलिरत्नापहारमिव। पक्षे अरिणा कर्णेन अहिरज्ञाततूणप्रविष्टः खाण्डवदाहे छिन्नमातृकोऽनुबद्धवैरः स एव बाणः तत्प्रयोक्ता। सहचरस्य सख्युः कृष्णस्य सद्यो रथं विनमय्य स्वकण्ठशरस्ययोगं परिहर्त्तुः शक्त्या व्याहता शत्रुवाञ्छा स्वाजिघांसा येन सः। नृपसूनुरर्जुनः। आशु शीघ्रं यथा स्यात्तथा। सर्पशराघातकृतं मुकुटरत्नापहारे भूपभङ्गं मस्तकमण्यपहाररूपं सर्प इव न सेहे॥२७॥

आश्विति। अमुना लक्ष्मणेन कर्णेन च धर्षणं भर्त्सनं अरातिं प्रति प्रत्यराति। आभिमुख्येऽव्ययीभावः। वैरिसन्मुखं पेतुः। कर्ण इन्द्रजितः श्रवणो राधेयश्च। उत्कटास्तीक्ष्णाः॥ २८ ॥

ग्रस्त इति। रणधरित्र्या संहृतसैन्यस्य निस्तीर्णं लङ्घितं स्यन्दनायाः अभिचारस्थलगतेः पदं स्थानं येन सः नरदेवजो लक्ष्मणः शत्रोरिन्द्रजितः रणकर्म शौर्यं असोढा न किन्तु सोढानेव। पक्षे ब्राह्मणशापात् भूमिग्रस्तरथचक्रस्य निस्तीर्णा अंगीकृता स्यन्दनापत् रथव्यापत् येन तस्य शत्रोः कर्णस्य महत्

ततः प्रतीतो नरदेवसूनुः समाप्तिमिच्छन्समरार्णवस्य ॥
संधाय संधां सफलीकरिष्यन् कर्णान्तसज्जं शरमुत्ससर्ज ३०

उद्यदञ्जलिकेनासौ नानाविक्रमशोभितः ॥
विशिखेन शरं निघ्नन् विस्मयं कस्य नाकरोत् ३१

क्षिप्रोत्क्षिप्तभ्रूकुटिभुजगाभीमभालं पुरस्तात्
न्यस्तापाङ्गं विशिखशिखया साग्रकं वैरिकण्ठे ॥

स्थैर्यं ना नरावतारः राजपुत्रोर्जुनः न सोढा सोढवान् । असोढ इति पाठः प्रामादिकः इत्यवोचम् ॥ २९ ॥

तत इति । 'प्रतीतः सादरेख्यात' इति विश्वः । जगतीन्द्रस्य दशरथस्य सूनुर्लक्ष्मणः सन्धां प्रतिज्ञां । कर्णान्तपर्यन्तं सज्जशरं सन्धाय मुमोच । जगति ख्यात ईशसूनुरर्जुनः कर्णस्य राधेयस्यान्ते नाशे सज्जं उद्यत् ॥ ३० ॥

उद्यदिति । क्रमेण धनुर्धरस्थानशोभितः तदुक्तं 'अपाङ्गे दक्षिणामुष्टिं वामं विन्यस्य लस्यके । पादमाकुञ्चयेद्वामं लक्ष्यनिश्चललोचन' इति असौ लक्ष्मणः उद्यदञ्जलिनिबद्धकरपुटं यथा स्यात्तथा केन न अनावि न स्तुतः। णु स्तुतौ कर्मणि तशब्दे णिच् । विशिखेन स्वप्ने कुबेरदत्तेन यमदत्तमिन्द्रजितः शरं प्रतिघ्नन् कस्य विस्मयं नातनोत् अपि तु सर्वस्यैव । आजाविति पाठे 'आजिः समावनौ युद्धे इति' विश्वः । पक्षे विविधविक्रमशोभितोसावर्जुनः उद्यता उद्यतेनाञ्जलिकाख्येन बाणेन अत्र कश्चित् रामायणेञ्जलिकादर्शनाद्भारते बाणेन बाणप्रतिघाताभावात् मूलविरोध इति वृथैव बभ्राम । तत्पक्षेऽन्यथैवाशयस्य पक्षान्तरे परस्परवारणसत्वान्मूलानुसारेणैव बाणक्षेपादिवर्णनस्य संभवदुक्तिकत्वाच्च ॥ ३१ ॥

लूनं तेन प्रसभमिषुणा भूषयामास भूमिं
जिष्णुद्वेष्टुर्मुखमशनकैर्मुक्तहुंकारमेव ॥ ३२ ॥
अङ्गभर्त्तुः शिरश्छिन्नमिति गद्गदवादिनी ॥
प्रपलायत संग्रामात्सा परेषां पताकिनी ॥ ३३ ॥
समं सुहृद्भिर्जयिनं समेतं
सभूपतिर्भ्रातरमभ्यनन्दत् ॥
उपेन्द्रमग्रप्रणतं महेन्द्रः
पुरेव वैरोचनिभङ्गहृष्टः ॥ ३४ ॥
चमूपतिर्मारुतिराश्विनन्दनौ गदाधरः पुण्यजनेश्वरस्तथा ॥
पुरःस्फुरत्कीर्तिधनं जयं प्रभोस्तमृक्षराजेन समं प्रतुष्टुवुः ३५

क्षिप्रेति । तेन लक्ष्मणेनार्जुनेन च जिष्णोरिन्द्रस्य स्वस्य च द्वेष्टुरिन्द्रजितः कर्णस्य बाणाग्रेण साग्रकं वैरिकण्ठे न्यस्तापाङ्गं यथा स्यात् तथा क्षिप्रमुत्क्षिप्तेन भृकुटिभुजगेनासमन्तात् भीमं भयङ्करं ललाटं यस्य तत् इषुणा लूनं छिन्नं मुखं उच्चैः त्यक्तहुङ्कारमेव भूमिं भूषयामास । नूनं जिष्णुर्द्वेष्टुरिति च पाठे नूनं निश्चितं जिष्णुर्भूमिं भूषयामास द्वेष्टुर्मुखं मुक्तहुङ्कारमेवासीदित्यध्याहार्यम् ॥ ३२ ॥

अङ्गेति । अङ्गानां हस्त्यश्वादीनां । अङ्गसम्बोधने वा । भर्त्तुः इन्द्रजितः अङ्गदेशभर्त्तुः कर्णस्य च । परेषां रक्षसां कौरवाणां च ॥ ३३ ॥

सममिति । भूपतिः रामो युधिष्ठिरश्च भ्रातरं लक्ष्मणमर्जुनं च उपेन्द्रमिन्द्रइवाभ्यनन्दत् वैरोचनिर्बलिः ॥ ३४ ॥

चम्विति । नीलो हनूमान् मैन्दद्विविदौ गदाहस्तः पुण्यजनानां रक्षसामीश्वरो विभीषणश्च । पुरः स्फुरत्प्रसरत् कीर्तिरूपं धनं येन तं प्रभोः रामस्य तमेवं पूर्णजयं ऋक्षराजेन जाम्बवता सह

रणस्य भूमिः कटकद्वये सा
शोकप्रहर्षाविभजत्समानम् ॥
निवेशयोर्वारिजकैरवाणाम्
निद्राप्रबोधौ युगपन्निशेव ॥ ३६ ॥
तदाहवे तीव्रकरस्य सूनो-
र्नक्तं चरेभ्यो निधनं निशम्य ॥
शुशोच राजा बहुधार्तराष्ट्रः
स्वदुर्नयस्यानुभवन्फलानि ॥ ३७ ॥
स्वामिना दशमुखेन नोदिता
दिङ्मुखानि रजसा निरुन्धती ॥

प्रतुष्टुवुः स्तुतवन्तः । पक्षे चमूपतिः धृष्टद्युम्नः मारुतिर्भीमः अश्विनन्दनौ माद्रेयौ पुण्यजनानां सत्पुरुषाणामीश्वरो गदाधरः कृष्णः प्रभोर्युधिष्ठिरस्य पुरः अग्रतः स्फुरत्कीर्तिः यथास्यात् ऋक्षराजेन चन्द्रेण समं सदृशं तं धनंजयमर्जुनं अस्तुवत् 'भवेत्पुण्यजनो यक्षे राक्षसे सज्जनेपि च' इति विश्वः । रामायणपक्षे रामस्य पुरः जयमर्थाल्लक्ष्मणस्येति कश्चित् ॥ ३५ ॥

रणस्येति । अतिभूमिरुत्कर्षकाष्ठा रामायुधिष्ठिरपक्षे हर्षं अन्यत्र शोकं वारिजानां सूर्यविकासिनां कैरवाणां चन्द्रविकासिनां निवेशयोराकरयोः ॥ ३६ ॥

तदेति । तीव्रकरस्य घोरकर्मकृतः तीक्ष्णहस्तस्य सूनोरिन्द्रजितः नक्तंचरेभ्यो राक्षसेभ्यः रणे मरणं श्रुत्वा धार्तराष्ट्रो राजा दशास्यो बहुधा शुशोच स्वदुर्नयस्य सीताहरणादेः। राक्षसेभ्यः पक्षे सूर्यसुतस्य कर्णस्य नक्तं रात्रौ चरेभ्यः। धार्तराष्ट्रः सुयोधनः बहु यथास्यात्तथा कृष्णाकेशाम्बराकर्षणादेः फलान्यनुभवन् ॥ ३७ ॥

प्रत्यराति विचचाल वाहिनी
धीरनादपरशल्यनायका ॥ ३८ ॥
ततः कृतव्यूहमुखाश्चमूभृता
स्थिरप्रभावा नरनाथसैनिकाः ॥
समभ्ययुर्भर्त्तुररातिमण्डलं
निशान्धकारं द्युमणेरिवांशवः ॥ ३९ ॥
द्रवदविरलधूलिध्वान्तरुद्धाम्बरान्तं
विघटितसुरलोकद्वारशाखाकपाटम् ॥
समदविधुतनारीनेत्रदत्तानुयात्रं
त्वरितविविधयोधं युद्धमासीद्ध्वजिन्याः ॥ ४० ॥
अभिशत्रुसमापतन्नितान्तं
पृतनानां पतिरेधितासनश्रीः ॥

स्वामिनेति। दशाननेन प्रेरिता रजसा दिङ्मुखानि आवृण्वती धीरनादा परेषां शत्रूणां शल्यभूता नायका यस्यां सा सेना वैरिसन्मुखं चलिता। पक्षे स्वामी दुर्योधनस्तेन स्वमुखेनादिष्टा दशदिङ्मुखानि दशमुखेन रजसेति वा। धीरनादः परः श्रेष्ठः शल्यो नायको नेताऽस्याः ॥ ३८ ॥

तत इति । चमूभृता नीलेन धृष्टद्युम्नेन च कृतव्यूहमुखाः हिंसितपरसमूहाग्रभागा रचितचलविन्यासविषमपुरोभागाश्च । स्फुरद्दीप्तयः वानरनायकस्य सैनिकाः प्रकटप्रभावाः नरनाथस्य युधिष्ठिरस्य च श्रितव्यूहमुखा इति पाठः सुगमः ॥ ३९ ॥

द्रवदिति। धूलिरेव ध्वान्तं द्वारशाखाद्वारं शाखायां द्वारोपरि काष्ठैःकृतं कपाटमिति वा । 'शाखामृगे सहाये च शाखा पक्षान्तरेपि चे' ति । विश्वः । अनुयात्रा पश्चाद्गमनम् ॥ ४० ॥

रजसा पिहितांशुमद्रराज
स्थगयन् व्योम गभीरमेघनादैः ॥ ४१॥
जनितशंखरवानरकुंजरक्षतजरञ्जितदिक् त्रिदिवौकसाम्॥
प्रतिभटाऽवटशल्यमुखोद्भटा परचमूर्मनुजेश्वरमावृणोत्॥४२
नरेश्वरशरच्छिन्ननानावीरं ततस्ततः ॥
भूमिभृद्धारसंहारि प्रधानं तत्र पप्रथे ॥ ४३ ॥
रथाश्वमातङ्गनिरंतराणि बलानि हत्वा द्विषतां बहूनि॥
क्षणेन धर्मप्रभवः क्षितीशः शक्त्याक्षितेरुद्धरतिस्म शल्यम्॥४४

अभीति। सेनानां पतिः पौलस्त्यः वैरिसन्मुखं समापतन्गच्छन् रराज एधिता आननश्रीरस्य रजसा पिहितांशुमान् सूर्यो यत्र तद्व्योम गभीरगर्जितैः पूरयत्। पक्षे मद्रराजः शल्यः वैरिसंमुखं समापतत् आगच्छत् प्रसन्नमुखः पिहितांशु व्योम स्थगयन्। वैकल्पिको विसर्गलोपः ॥ ४१ ॥

जनितेति। परेषां रक्षसां चमूः देवानां जनितं सुखं मनुजेश्वरं रामं मनुजो राम ईश्वरो यस्य तं सुग्रीवमिति वा। खराणां तीक्ष्णानां वानरश्रेष्ठानां रक्तैर्लोहितीकृतदिक् प्रतिभटरूपेषु गर्तेषु बाणमुखानि यस्याः उद्भटाः उग्राः तैः उद्भटेति वा। पक्षे मनुजेश्वरं युधिष्ठिरं देवानां जनितः शंखादिवाद्यघोषो यया हस्तिरक्तरञ्जितदिक्। प्रतिभटानामवटो ग्रसनशीलो मद्रराज्ञो मुखं प्रधानं सुखं यस्याः प्रतिभटानावटति। 'वट' वेष्टने स चासौ शल्यश्चेति वा ॥ ४२ ॥

नरेश्वरेति। नरः रामः ईश्वरो यस्य स सुग्रीवस्तस्मिन् निपतितैः शरैरिति वा। पक्षे नरेश्वरो युधिष्ठिरः ॥ ४३ ॥

रथाश्वेति। शक्त्या अस्त्रभेदेन भूमेः सकाशान्मद्रेशमुद्धार। स्वर्गं प्रति निनाय जघानेत्यर्थः ॥ ४४ ॥

विननाश विरूपाक्षस्तीव्रतापनिपातितः ॥
यथा विपक्षः शकुनिः सहदेवनिपीडनैः ॥ ४५ ॥
सुग्रीवेन दृढाङ्गदेन मथितं भीमेन विद्विड्बलं
सेनानीर्युयुधान एष जगृहे प्रौढाऽरिहा संजयम् ॥
उक्षांचक्रतुरश्विनौ श्रितनयौ क्षोणीं द्विषच्छोणितै-
र्ऋक्षाणामधिपेन पद्मघनवत् ध्वस्ताः परे जिष्णुना ४६

विननाशेति। स विरूपाक्षो राक्षसः। ह स्फुटं। विपक्षः हतसहायः तीव्रेण तापनिना सूर्यपुत्रेण सुग्रीवेण पातितः सन्विननाश ममार यथा विरूपनेत्रः। पक्षे ग्रीष्मे तीव्रातपेन निपातितप्रायः विगलितपक्षो देवस्य पर्जन्यस्य निपीडनैर्नश्यति तैः सहेति वा। 'देवः सुरे धने राज्ञि देवमाख्यातमिन्द्रिये'। पक्षे विवर्णाक्षः शल्यः युधिष्ठिरस्य तीव्रप्रतापेन निपातितः विननाश। यथा सहदेवकर्तृकनिपीडनैः शकुनिः सौबलः सोपि तेन हत इत्यर्थः।यद्वा शल्यवधस्य पूर्वश्लोकएवोक्तः पूर्वोक्त एव विशेषणः शकुनि सहदेवप्रहारैः तथा विनष्टः यथा यथा विपक्षः वैरमकरोत् तथा नाशं प्रापेत्यर्थः ॥ ४५ ॥

सुग्रीवेति। कपिराजेन दृढेन वालिसुतेन शोभनग्रीवेण दृढबाहुभूषणेन च भीमेन भयङ्करेण भीमसेनेन च युयुधानो युध्यमानः एष च सेनानीः सुग्रीव एव प्रौढोऽरिकर्तृको हास्य उपहासो येन तं जयं जगृहे पक्षे सेनापतिर्युयुधानः सात्यकिः प्रौढवैरिहन्ता सञ्जयं गावल्गणिं जग्राह धृतवान् अश्विपुत्रौ मैन्दद्विविदौ माद्रेयौ च जिष्णुना जयशीलेन ऋक्षाधिपेन जाम्बवता पद्मवनेन तुल्यं परेऽन्येध्वस्ताः चन्द्रे पद्मवनानीवार्जुनेनेति च रामायणे पूर्ववृत्ताऽनुकीर्त्तनमेतत् ॥ ४६ ॥

विलयं व्रजति क्रमाद्बलौघे नृपसेनामसुयोधनां विलोक्य ॥
गुरुपुत्रकृपानुबद्धभावः कृतवर्मा सुभटो विदूरमागात् ४७
आग्नेयेन रणे धृष्टद्युम्नेनान्ये निपातिताः ॥
वसन्ते कामदेवेन प्रोषिता इव रागिणः ॥ ४८ ॥
इति श्रीराघवपाण्डवीये महाकाव्ये द्वादशसर्गः समाप्तः

—००—

## त्रयोदशः स्वर्गः ।

अथ स्फुरद्दक्षिणबाहुरुच्चैरङ्गारशेषानलसन्निभस्य ॥
अल्पावशिष्टात्मबलस्य शत्रोर्नराधिपो निर्गममन्विवेष ॥ १

विलयमिति नृपयोः रामसुयोधनयोः असुयोधनां दुःखयो-धनीयां दुर्योधनशून्यां च गुर्व्या पुत्रकृपया गुरोर्महतः पुत्रस्य कृपयेति वा व्यासमनस्कः द्रौणिः शारद्वतानुसारिचित्तश्च कृत-वर्मा अमुक्तकवचः तन्नामा हार्दिक्यश्च असूनां प्राणानां भर्त्ता 'भट' भृतौ यद्वा 'वटभट'परिभाषणेउपलब्धप्रमाणः असुभटो रावणः महावीरः कृतवर्मा च ॥ ४७ ॥

आग्नेयेनेति धृष्टं द्युम्नं तेजो यस्य तेनाग्निपुत्रेण नीलेन धृ-ष्टद्युम्ननाम्ना अग्निसंभवेन च 'द्युम्नं वित्ते पराक्रम' इति वि-श्वः कामदेवेन कन्दर्पेण काव्यकर्त्ता वसन्ते ऋतुविशेषे वसंत्य-स्मिन् इत्यारण्यादौ च 'हृदहवहीत्यादिनाझच् प्रोषिताः प्रवा-सिनो देशभ्रष्टाश्च ॥ ४८ ॥

आवश्यकपदश्लेषव्याचिख्या सावशात्मनः ॥
लक्ष्मणस्य कृतौ सर्गो द्वादशः समपद्यतः ॥ १२ ॥

इति राघवपाण्डवीयकाव्ये टीकायां द्वादशः सर्गः समाप्तः ।

अथ शुभसूचकः स्फुरन्स्पंदमानो दक्षिणबाहुरस्य नराधिपो रामो युधिष्ठिरश्च । शत्रोः पौलस्त्यस्य सुयोधनस्य च । आ-

रिपोर्न सहमानास्ते हरिमुख्याविलंघनम् ॥
रुरुधुस्तदधिष्ठानंसरोवरमिव द्विपाः ॥ २ ॥
ततःसगर्वं निरगादरातिर्विपक्षसिंहध्वनिकीर्णकर्णः ॥
तदा ह्रदा न्नाग इव स्वधाम्नासंदर्शितोत्साहमहीनलक्ष्यः॥३॥
दोर्विक्षेपैरपारैः परिघशतमिव व्योम्नि संचारयंतं
दृप्तारेर्मण्डलेषु प्रतिदिशमटनैर्दर्शितानेकवक्त्रम् ॥
कुर्वाणं दृष्टिपातैरनलकवलितानिव सैन्यानि दूरा-
त्तं कोपादापतंतं कथमपि ददृशुः प्रत्यनीकं प्रवीराः ४
तमा वायाऽह्वत दूषणघ्नो वृकोदरः काल इवात्तकोपः ॥
उद्योजितश्रीर्वृषवाहनेन भर्त्रा भृगूणामिव कार्त्तवीर्यम्॥५॥
त्मा शरीरमेव बलं यस्य निर्गमं गृहाज्जलाशयाच्च ॥ १ ॥

रिपोः रावणस्य सुयोधनस्य च हरिमुख्याः वानराः कृष्ण नायकाः पाण्डवाश्च घनं बिलं होमस्थामं घिलङ्घनमतिक्रमश्च त-दधिष्ठानं तदाश्रयद्विपाः सर इव सरोरूपमधिष्ठानद्विपा इ-वेति च । 'लङ्घनं तूपवासे स्यात्क्रमेण वलनेपि चे'ति विश्वः२

ततेति । अरातिः रावणः दुर्योधनश्च । विपक्षेति । वानर-श्रेष्ठानां हर्षेण ध्वनिः भीमादीनां गर्जितं चाल्हादात् । अहीन-स्य गरुडस्य लक्ष्यः सर्प इव ह्रदादिति च तत्संदर्शितं होमस्थानात् व्याससरसश्च ह्रदान्नाग इवेत्यावृत्त्यायोज्यम् । अरातेर्युद्धमरणा-दिरूपं लक्ष्यमुद्देश्यं यस्यां ॥ ३ ॥

दोर्विक्षेपैः सञ्चारयन्तं मण्डलसमूहैः अनेकवक्त्रत्वं दशानन-त्वात् पक्षे पातवशाद्दर्शितानेकवक्त्रामिव ॥ ४ ॥

तमेति ॥ तं रावणं सुयोधनं च दूषणघ्नो रामो दोषहन्ता च । आह्वत । स्पर्धया आहूतवान् 'स्पर्धायामाङः'इत्यात्मनेपदम् । 'लिपि सिचि ह्वश्चे'ति अङ् । काल इव सकोपः आदरो

मुखारविन्दैः सुरसुन्दरीणां
नभो बभूवेह सहस्रचन्द्रम् ॥
रुहस्रगङ्गं च तदोत्सुकानां
विमानहंसावलिभिः सुराणाम् ॥ ६ ॥

सरस्वतीपूततनुस्तरस्वी चिराय जायाविरही व्रतस्थः ॥
उपेयिवान्संयुगधाम रामो हरिप्रधानैर्ददृशे सुहृद्भिः ॥७॥

जज्ञे तयोरथ तदुद्भवकाय भाति
स्फीताङ्गदोज्ज्वलमहाभुजयोः समीकम् ॥
अन्योन्यहेतिपरिघट्टनकीर्णवह्नि-
ज्वालापरिस्फुरितसंनिभविद्युदर्चिः ॥ ८ ॥

निर्भयः वृको व्याघ्र इवेति केचित् । वृकनामकाल इवेत्यन्ये । वस्तुतस्तु वृकोऽग्निविशेष उदरेऽस्य सकाल इव 'यस्य तीक्ष्णो वृको नाम जठरे हव्य वाहनः मया दत्तः स धर्माय तेन चासौ वृकोदरः अतीवाद्यशीलश्च नागायुतबलो महानि'ति । भीमद्वादशीकर्तृत्वेन भीमं प्रकृत्य ब्रह्माणं प्रतिमासोवेति शिववचनात् । पक्षे वृकोदरो भीमः क्रुद्धः काल इव वृषवाहनेन शिवेन भृगूणां भर्ता जामदग्न्यः ॥ ९ ॥

मुखेति । इव संग्रामे उत्सुकः युद्धदिदृक्षयोत्कण्ठिनां हंसावलीनां शौक्ल्येन गङ्गासाम्यम् ॥ ६ ॥

सेति । वाणी नदी च तरो बलं रंहश्च जाया सीता रेवती च व्रतं ब्रह्मचर्यं संयुगधाम तात्कालिकं वीरश्रीसंज्ञंसञ्जयसूचितं रणस्थानं च । उपेयिवान्प्राप्तः आगतश्च रामो दाशरथिः बलश्च । हरिप्रधानैः सुग्रीवादिवानरश्रेष्ठैः कृष्णादिभिश्च जज्ञे । तयोः रामरावणयोः भीमसुयोधनयोश्च समीकं रणम् ॥ ॥ ७ ॥ ८ ॥

आद्यैरायुधपातपूततनुभिर्वीरैर्विमानस्थितै-
रभ्यस्तामरसुन्दरीरतिरसैः सासूयमालोकितः ॥
घोरस्यन्दनवेगनिःसहमहीदिक्कुम्भिकुम्भी नस
भ्रष्टप्रार्थितशांतिराहवविधिस्तत्रासनिश्वासयोः ॥९॥
धूतचापलतया विराजतोर्मार्गणाभिहतमर्मणोर्मिथः ॥
नान्तरं ददृशुराहवे तयोः साधुवादमुखरानभश्वराः॥ १० ॥
भुग्नाशोकस्तबकानिकरैः सावतंसा इवाशा
विद्युच्छेदैरिवशबलिताः शारदावारिवाहाः ॥
उल्काजालैरिव जटिलिता जज्ञिरे व्योमगर्भा
स्तूर्णोत्कीर्णैः प्रसभमुभयोरायुधार्चिः कलापैः॥११॥
मनोरथगतिध्वंसपरिवर्धितरंहसोः ॥
रणकर्मसु दक्षत्वादश्रांतमुभयोरभूत् ॥ १२ ॥
तथा तयोर्विक्रम उद्दिदीपे दिदृक्षयाव्योम्नि यथा समेताः॥
दिवौकसोप्येकतरेण लभ्यं जयं न निश्चेतुमलं बभूवुः ॥१३

आद्यैरिति ॥ घोरस्यन्दनेति रामस्यापीन्द्रप्रहितरथसत्वात् भ्रष्टोग्रगामिनि आस्त आसीत् आसेति पाठे अस गत्यादित्यस्य रूपम् । अस्तेर्लुङि भूभावात् ॥ ९ ॥

धूतेति । कंपितधनुर्लतया मुक्तचापलत्वेन च मार्गणो बाणः परस्परच्छिद्रान्वेषणं वा ॥ १० ॥

भग्नेति । तयो रामरावणयोर्भीमदुर्योधनयोश्च आयुधानां शराणां द्वयोश्च ॥ ११ ॥

मनेति ॥ इच्छाविघातेन क्रुद्धयोः सुदक्षत्वादश्रांतमभूत् ॥ रणकर्मसुनैपुण्यादश्रांतं श्रमाभावो वा उभयोः रामरावणयोः भीमसुयोधनयोश्च ॥ २१ ॥

तथा शक्रभावनं खद्दिवं नभ इति त्रिकाण्डशेषाद्दिवमोकौ

मध्ये तयोरायुधघट्टजन्मा प्रतिक्षणं वह्निशिखोल्लसन्ती ॥
भीता तयोरेकतरं गृहीतुं साक्षाज्जयश्रीरिव लक्ष्यते स्म १४
पौष्पी वृष्टिः पुरस्तात्तदुपरि कुसुमोपक्षये खेचरौघै-
र्मुक्ता मुक्ताकलापाःकिल तदुपरमे केवलाः साधुवादाः ॥
संयत्संरम्भभीतास्त्रिदिवयुवतयोऽप्यश्चलैरंशुकानां
चक्षूंष्याछादयन्त्यो दिवि दयिततमैर्दूरमालापगीताः ॥१५॥
दिग्भित्तिप्रतिनाददुन्दुभिरवप्रक्षोभिगर्भोच्चल-
न्नानानागनगेन्द्रचक्रनिकरप्रोत्क्षिप्तवीचिच्छटः ॥
कूलातानुदगाच्चमत्कृतितया नूनं तयोरायुध-
ज्वालौर्वानललङ्घितस्य नभसो निर्वापणायाम्बुधिः॥१६॥

विलोक्य विद्वेषिवधे ससंशयं
रणे जगत्प्राणभुवं नृपात्मजम् ॥
उपायमस्मै निभृतं न्यवेदय-
ज्जयोचितं कोपि पुरातनो मुनिः ॥ १७ ॥

एषां एकतरान्यतरो रामो रावणो वा । एवं पक्षेपि ॥ १३ ॥
मध्ये घट्टः सङ्घट्टः अग्निज्वाला जयश्रीरिव ददृशे ॥१४॥
पौष्पीति । चक्षुषा छादयन्त्य इति भीतजातिः ॥ १५ ॥
दिग्भित्तीति । नागा जलहस्तिनः वीचीः क्षिपंतीति त-
त्क्षिपः छट इति पाठे बहुव्रीहिः ॥ १६ ॥

विलेति ॥ जगत्प्राणस्तत्पालको दशरथः वायुश्च तदुद्भवं नृपात्मजं रामम्भीमं च कोपिषु कोपनेषु । तामसेषु राक्षसेषु चिरञ्जीवी मुनिस्तज्ज्ञातिद्वाषास्पष्टो विभीषणः कोपि अचिन्त्यमहिमा चिरन्तनो मुनिः कृष्णश्च निभृतं निगूढं यथास्यात्तथा अस्मै रामाय भीमाय च उपायं नाभिगतामृतशेषं उरुघातं च । इह कोपि मुनिः ब्रह्मणोप्रदिष्टो मातलिर्नारदो वेत्याद्यसम्भवदुक्तिकमिति स्पष्टमेवाकरदृशाम् ॥ १७ ॥

प्रवर्त्य भीमोथ लसन्महायुधं
विरोधिवीरं निजघान मर्मणि ॥
पुरेव रामः शतमन्युसम्भवं
महास्त्रमोक्षेण निशाचरेश्वरम् ॥ १८॥
ततः स उच्चैर्गतमानसोपि
दुर्योधनश्छिन्नदशाननश्रीः ॥
प्राप्योरुभङ्गं जगतीं जगाम
सुरद्विषां मूर्त्त इवाभिमानः ॥ १९ ॥
अन्ते संग्रामयज्ञस्य सद्यः पूर्णाहुतीकृतः ॥
तत्कायः परिचस्कार दारुणं रणमण्डलम् ॥ २० ॥
विससृजुरथ वृष्टिं कौसुमीमम्बुवाहा-
ननृतुरमरवध्वो दध्वनुः खेमृदङ्गाः ॥

प्रवेति । भीमो भयङ्करो वृकोदरश्च महदायुधं महतीं युद्धं च उभयत्र समं वा । विपक्षवीरं रावणं सुयोधनं च मर्मणि नाभौ ऊर्वोश्च युवारामः शक्रसुत वालिनामिव निशाचरेश्वरं राक्षसपतिं जघान पक्षे यथा रामो वालिनं रावणं च शताधिक क्रोधानां शोकानां चोत्पादकं रावणमेव वा ॥ १८ ॥

ततः स रावणः गतमानसो गतप्राणः उच्चैः अत्यन्तं दुःखयोधनीयः छिन्नसर्वास्यशोभः उरुं महान्तं भङ्गं प्राप्य भूमौ पपात । पक्षे उच्चैर्गतमानसो । दृप्तः ससुयोधनः छिन्नदशा विवर्णावस्था मुखश्रीर्यस्य ऊर्वोः भंगजानुभ्यां भूमिं जगाम सुरेति रक्षसां दैत्यानां चमूर्त्तोभिमान इव सोपि तदैवोच्छिन्न इति भावः ॥ १९ ॥

अन्तेति । तस्य रावणस्य सुयोधनस्य च देहपरिष्करो विभूषणमित्यमरः ॥ २० ॥

जगुरनिमिषभूता दिक्पुरन्ध्र्यः प्रसेदु-
स्तुतुषुरखिललोका मङ्गलेनेव पूर्णाः ॥ २१ ॥

तीर्त्वा प्रतिज्ञां पवनात्मजे-। प्रत्यागतेनाभिहितारिभङ्गा ॥
मेने तदानीं मनुजेन्द्रपत्नी महोत्सवं भर्तृमुखावलोकम् ॥२२

महावराहेण महीव सागरा
त्समुद्धृता भीमबलेन सङ्कटात् ॥
नरेन्द्रपत्नी प्रतिपन्नमङ्गला
जहर्ष जन्मान्तरमास्थिता यथा ॥ २३ ॥

पत्युः प्रतिज्ञार्णवलङ्घनेन सकञ्चुका संचितचारुवेणी ॥
अनल्पसन्तापहुताशमध्याद्विनिःसृता राजवधूर्विरेजे २४

राज्ये नियुक्तेन विभीषणेन हरिप्रणेत्रानुगतो बलेन ॥
नराधिपः स्वां नगरीं प्रतस्थे विमानराजप्रभुतां प्रपन्नः॥२५॥

विसेति। अनिमेषाः देवाः सूताः बन्दिनश्च भूता इति पाठे देवयोनिविशेषाः दिश एव पुरन्ध्री नारी 'भानुर्भामिनीकामिनी चे'ति हलायुधः ॥ २१ ॥

तीर्त्वेति। पवनात्मजेन हनुमता भीमेन च अरी रावणो दुर्योधनश्च पत्नी सीता कृष्णा च भर्तुर्मुखावलोकरूपं महोत्सवं इयेष प्राप च ॥ २२ ॥

महेति। भयंकरं बलेन रामेण भीमस्य बलेन च पत्नी सीता कृष्णा च ॥ २३ ॥

पत्युरिति। पत्युः रामस्य भीमस्येति कृताकल्पा निबद्धवेणिश्च अनव्यः सन्तापो यस्य तस्मादग्नेः प्रविश्य निर्गता तीव्रसन्तापाग्नेर्मुक्ता च राजवधूः सीता कृष्णा च ॥ २४ ॥

राज्येति। लङ्काधिपत्ये नियुक्तेन विभीषणेनानुगतः हरिः सुग्रीवः प्रणेता नायकोऽस्य तेन च नराधिपो रामः स्वां नगरी

समुद्वहन् भर्त्तरि भक्तिमुत्कटां
कृपानुगामी कृतवर्मनोदितः ॥
तमन्वगच्छन् गुरुवंशवर्धनः
क्षपाचरो राजवरं विभीषणः ॥ २६ ॥

स कुलस्यानुकूल्येन शनैरावान्पताकिनीम् ॥
प्रभञ्जनः कुम्भजाशासंभवस्तामवर्धयत् ॥ २७ ॥

मयोध्यां प्रतस्थे ॥ विमानराजस्य पुष्पकस्य प्रभुतां स्वामित्वं प्राप्तः। पक्षे तद्राजरूपेण भयङ्करेण कृष्णाज्ञावर्तिना सैन्येनानुयातो विगताभिमानानां विशिष्टसन्मानभाजां वा। राज्ञां स्वाम्यं प्राप्तो युधिष्ठिरो हस्तिनापुरमिन्द्रप्रस्थं प्रतस्थे ॥ २९ ॥

समुद्वेति । मुत्प्रीतिस्तत्साहितः भर्त्तरि रामे महतीं वहन् रामस्य कृपामनुगच्छतीति तदनुगामी तदनुरूपस्थितिः कृतं वर्मणः कवचस्य नोदनं मोचनं येन सः गुरोर्महतो वंशस्य पुलस्त्यकुलस्य वृद्धिजनकः विभीषणः क्षपाचरो राक्षसः तं राजश्रेष्ठं राममनुजगाम । पक्षे गुरोर्द्रोणस्य वंशवर्धनोऽश्वत्थामा भर्त्तरि दुर्योधने भक्तिं समुद्वहन् कृपो मातुलोनुगामी यस्य कृतवर्मणो हार्दिक्यस्य नोदनः प्रेरकः क्षपायां रात्रौ सौप्तिकवधार्थं चरतीति सः विभीषणः क्रूरकर्मकरत्वाद्भयङ्करः तं राजबलं राज्ञांबलभूतं युधिष्ठिरमन्वगच्छत् ॥ २६ ॥

सकुलस्येति । कुम्भजस्यागस्त्यस्याशा दक्षिणा दिक् तत्संभवः प्रभञ्जनो दाक्षिणात्यो वायुः सकुलस्य पवमानकुलस्य हनूमतः आनुकूल्येन शरैः जलैश्च सह शनैरिति पाठे मन्दंमन्दं आगच्छत् अवर्धयत् चिच्छेद वर्धच्छेदनपूरणयोः चुरादिः। केचित्तु शकुनस्य पक्षिणः शुभसूचकस्य आनुकूल्येन सह शनैः पताकिनीं वैजयन्तीयुक्तां रामसेनां सौभाग्यसम्पन्नां सीतां वा

अभ्यर्णं कीर्णसेनापतिपृथुकुणपं कृत्तभीष्मारिकण्ठं
योधव्रातप्रतीकैर्विशमितवसुधं ध्वस्तनानाकुमारम् ॥
द्रष्टुं वेतालमारीयुतमुपरि पतत्फेरुभेरुण्डरुण्डं श्रोतुं
वानालमासीत्पथि नृपतिवराधूर्यपुत्राजिरंतत् ॥ २८ ॥

कृतप्रतीकारमरेः कृतागसः
समग्रचूडामणिमौलिनिग्रहात् ॥
अभिष्टुवन्तो विजयं महाभुजाः
ससोदरं तं सुहृदोनुवव्रिरे ॥ २९ ॥

आगच्छत् दाक्षिणात्यो वायुः तां सेनां सीतां वा वृद्धिमगमत् । पक्षे शकुनस्य काकोपसंहर्तुरुलूकस्यानुकूल्येन तत्प्रदर्शितयुक्त्या द्रौणिर्धृष्टद्युम्नादि सेनामवधीत् । 'पताका वैजयन्त्यां च सौभाग्येपि ध्वजेपि चे'ति कोश इत्याहुः ॥ २७ ॥

अभ्येति । समीपे सेनापतिः प्रहस्तादिः धृष्टद्युम्नश्च कुणपः शव । भीष्माः भयङ्कराः अरयो भीष्मारिः शिखण्डी च । कुमारा अतिकायादयो द्रौपदेयाश्च वेतालाः भूतभेदाः केरवः शृगाला भेरुण्डं भीषणं तुण्डं मुखं। रुण्डं इति ' पाठे रुण्डो तुण्ड ' इति हारावली 'रुण्डः कबन्ध' इति मालती। टिप्पटे सर्वरक्षित इति कश्चित् । 'भेरुण्डो देवताभेदे यक्षिण्याम्बिकयोः स्त्रियाम् - पानके वाच्यलिङ्ग' इति मेदिनी । तथा च उपरि पतच्छृगालभयानकं कबन्धं वधू सीता द्रौपदी च आर्यः श्वशुरो दशरथः द्रोणश्च तत्पुत्रस्य रामस्याश्वत्थाम्नश्च युद्धं रणं श्रोतुं न शशाक कारुण्यात् पुत्रादिशोकाच्च ॥ १८ ॥

कृतेति । अरेः रावणस्य द्रौणेश्च कृतमागोऽपराधः दारहरणं सौप्तिकं सूतादिवधश्च येन तस्य समग्राणां चूडामणिसहितानां मौलीनां मस्तकानां छेदनात्तत्यग्रशिरोरत्नग्रहाच्च कृत-

एवं विलङ्घ्यापदमर्णवं वा जवेन पश्चात्कृतदीर्घभावः ॥
सबन्धुवर्गं भरतप्रधानं ददर्श राजा धृतराष्ट्रमग्रे ॥३०॥

शिखावलानामिव वारिवाहं
पिकावलीनामिव चैत्रमासम् ॥
उदन्वतामिन्दुमिवोज्जजृंभे
प्रीतिस्तमालोकयतां जनानाम् ॥ ३१ ॥

चिराद्वियोगेन सहैव तीव्रे
व्रते समाप्ते परिपाकभाजा ॥
फलोदयेनेव तदीक्षणेन
कृतार्थतामापुरमात्यवर्गाः ॥ ३२ ॥

श्रीखण्डद्रवनिरजीकृततथा वल्गत्पताका क्वचि
द्भास्वत्तोरणरातिरुत्सुकजनप्रारब्धरम्योत्सवा ॥
हृद्या तोद्यरवा ससम्भ्रमवधू कान्तोच्चहर्म्यावली
पत्यावेष्यति कामिनीव नगरी सा क्लृप्तशोभा बभौ ३३

करकिसलयमुक्तैर्लाजवर्षैर्वधूना-
मलघुभिरनुवेलं कीर्यमाणाङ्गयष्टिः ॥

वैरनिर्यातनं विजयं विशिष्टजययुक्तं अर्जुनं च स्तुवन्तः सुग्री-
वाद्याः कृष्णाद्याश्च सलक्ष्मणं रामं सयुधिष्ठिरादिमर्जुनं सभीमा-
दियुधिष्ठिरमेव वाऽनुजग्मुः ॥ २९ ॥

एवं आपदमिवार्णवं तमिवापदं च वा इवार्थे स रामो युधि-
ष्ठिरश्च भरतप्रधानं कैकेयीसुतं कौरवाग्र्यं च अग्रे राष्ट्रधरं त-
न्नामाम्बिकेयं च ॥ ३० ॥

शिखेति । मयूराणां तं रामं युधिष्ठिरं च ॥ ३१ ॥

चिरेति । तयोः रामयुधिष्ठिरयोः दर्शनेन ॥ ३२ ॥

श्रीखण्डेति । पत्यौ रामे युधिष्ठिरे च ॥ ३३ ॥

करेति ॥ अवनिपालो रामो युधिष्ठिरश्च ॥ ३४ ॥

प्रमुदितजनवर्गं राजमार्गेण गत्वा
भवनमवनिपालः प्राविशत्पूर्वजानाम् ॥ ३४ ॥

नाथेनसाकं प्रथमं गताया-
स्तेनैव साकं पुनराभजन्त्याः ॥
साक्षाच्छ्रियो मूर्त्तिरिवाविवेश
पुरं नरेन्द्रस्य तदा पुरन्ध्री ॥ ३५ ॥

तदा तदालोकनसत्वराणां
मुखैर्वधूनां निचिता गवाक्षाः ॥
विकासिहेमाम्बुजनिर्भराणां
सरोवराणां समतामवापुः ॥ ३६ ॥

चयेन दत्ताधरलोचनत्विषां
विलक्ष्यमाणानुनयेन सुभ्रुवाम् ॥
सुवर्णवातायनपङ्क्तयस्तदा
विचित्ररत्नैः खचिता इवाबभुः ॥ ३७ ॥

शरीरसंधारणदुःखराशेरे
तत्फलं श्रेय इति स्मरन्ती ॥
स्नुषामुखन्यस्तसबाष्पवृष्टिं
भक्त्या ववन्दे जननीं नरेन्द्रः ॥ ३८ ॥

आयोधनान्मृत्युमुखादिवोग्रा-
द्विनिसृतं भ्रातृसहायमग्रे ॥
कृतप्रणामं तमवेक्ष्य माता
बालस्तदा जात इतीव मेने ॥ ३९ ॥

नाथेति । पुरन्ध्री सीता कृष्णा च ॥ ३५ ॥

तदेति । तस्याः सीतायाः द्रौपद्याश्च ॥ ३६ ॥

चयेति । विशेषेण लक्ष्यमाणा अनुभवा यत्र सर्वेषां प्रत्येका-नुकाभावाद्रत्नतुल्यता ॥ ३७ ॥

शरीरेति ॥ सभर्त्तृकस्नुषादर्शनं स्नुषा सीता कृष्णा च ॥ जननी कौसल्या कुन्ती च नरेन्द्रो रामो युधिष्ठिरश्च ॥ ३८॥

सन्मोचिते तस्य जटाकलापे
प्रसाधकैः कङ्कतसक्तहस्तैः ॥
निरन्तरग्रन्थिरपि श्लथोभू-
त्तदा जनानां हृदयेषु शोकः ॥ ४० ॥

अथाभिषेकाय नृपस्य मौलौ
सद्यो विसृष्टा निपुणाः पुमांसः ॥
तीर्थाम्भसामानयनाय चेरुः
पृथ्वीरसानामिव सूर्यपादाः ॥ ४१ ॥

तं चार्वङ्ग्या सह दयितया भद्रपीठोपविष्टं
वारां पूरैः कनककलशावर्जितैरभ्यषिञ्चन् ॥
इष्टान्मन्त्रान्नघदघहरान् व्याहरन्तो मुनीन्द्रा
मेरुं मेघा इव सुनिनदाः सेवितं कल्पवल्ल्या ॥ ४२ ॥

जलोच्चयः स्वान्मुकुटाग्रभागा-
न्निपत्य गात्रं परितो विसर्पन् ॥
रराज मेरोः शिखराभिघाता-
द्विष्वग्विसारीव सुरापगौघः ॥ ४३ ॥

आयोधनेति । भ्राता लक्ष्मणो भीमादयश्च तं रामं युधिष्ठिरं च । माता कौसल्या कुन्ती च ॥ ३९ ॥

राममेकाकिगतौ बाहुलकाद्दतच् । गौरादिः 'ङ्यापो'रिति-स्वः । 'प्रसाधनी कङ्कतिके' त्यमरः । कङ्कतेति पाठो युक्तः । 'कङ्कतं तु प्रसाधनमि'ति क्लीबकाण्डे । 'कङ्कती तु प्रसाधनी' ति त्रिकाण्डे च नाममाला ॥ ४० ॥

अथेति । मौलैः अमात्यादिभिः ॥ ४१ ॥

तं च रामं युधिष्ठिरञ्च ॥ दयितया सीतया कृष्णया च । भद्रपीठं मण्यादिमयं राजासनं नृपासनं यत्तद्भद्रासनमित्यमरः ॥ ४२ ॥

जलेति । विष्वक् सर्वतः ॥ ४३ ॥

सद्यो विद्याधरकरपुटैर्वारिवाहैश्च मुक्ता
दूरोत्सर्पत्परिमलमिलद्भृङ्गसङ्गीतहृद्या ॥
ज्योत्स्ना फेनस्तबकसदृशामङ्क्षु पर्यस्तरत्क्ष्मां
दिव्योद्यानद्रुमशिखरजा पुष्कला पुष्पवृष्टिः ॥४४॥

प्रासादान् प्रतिनादयन् क्षितिभृतां द्राक् कन्दराः पूरयन्
दिग्भित्तीः प्रतिघट्टयन् प्रगुणयन्नम्भोनिधीनां ध्वनिम् ॥
मूर्च्छन्नुच्चविमानसंघममरस्वर्लोकवाद्यस्वनै-
राध्मातः शिवतातिरास जगतः कल्याणतूर्यध्वनिः ॥४५॥

तं तरुण्योभिषेकान्ते राजानं निरराजयन् ॥
दीपैर्विद्युत्कलापेन मेघमाला इवाचलम् ॥ ४६ ॥

परितापमथानुदज्जनानां
क्षितिभर्त्तुः कृतशोभमातपत्रम् ॥
निरवद्य तदीयकीर्तिगङ्गा
नवपूरोत्सुकहंसमञ्जुलाभम् ॥ ४७ ॥

विमलमुकुटमौलिः कुण्डलेद्धाङ्गदश्री
र्मणिमयविलयाढ्यस्तारहाराभिरामः ॥
परिगतकटिसूत्रः सोधिकप्रेक्ष्य आसी-
दपर इव जनानां पुण्यजः पारिजातः ॥ ४८ ॥

सद्येति। मङ्क्षु शीघ्रं पर्यस्तरत् ॥ आच्छादितवती ॥ ४४॥

प्रासादेति ॥ मूर्छत्। शिवतातिः शिवङ्करः। आस्त आसीत् आसेति पाठे अस गत्यादिष्वित्यस्य लिटि रूपं अस्तेर्भूभावेनापहारात् ॥ ४५ ॥

तामिति । तं रामं युधिष्ठिरं च निरराजयन् नीराजयन्तिस्म ॥ ४६ ॥

परितापमिति । क्षितिभर्तुः रामस्य युधिष्ठिरस्य च ॥ ४७॥

विमलेति । स रामो युधिष्ठिरश्च ॥ ४८ ॥

पुराणभूपालपरंपराणां
साम्राज्यलक्ष्मीपरिकार्मणं सः ॥
मणिप्रभाभास्वरमध्यतिष्ठन्
सिंहासनं सूर्य इवोदयाद्रिम् ॥ ४९ ॥
मणिदर्पणमण्डले मनोज्ञे
प्रतिफुल्ला विललास तस्य मूर्त्तिः ॥
सुधियां हृदयेषु सद्गुणौघः
ककुभां भित्तिषु पुण्यकीर्त्तिपूरः ॥ ५० ॥

लीलापातैर्नयनचलनैः सस्मितैर्भ्रूविलासै-
र्यूनां चित्ते मनसिजदशां गाढमुद्बोधयन्त्यः ॥
चञ्चत्सिञ्जद्वलयनिजदोर्वल्लरीवेल्लितैस्तं
सेवन्ते स्म प्रवणमबलाश्चामरालीमरालैः ॥ ५१ ॥

प्रसन्नचक्षुश्चलनेऽनुक्षणं
किरीटकोटीषु कराग्रसंपुटम् ॥
विधारयन्तः सुहृदश्चिराय तं
यथोचितस्थानजुषः सिषेविरे ॥ ५२ ॥
अथोचिताभीष्टवरप्रदानै
रुत्साहविस्रम्भकरैश्च वाक्यैः ॥
कृतानुयोगैश्च गुणानुरूपै
रतूतुषन्मित्रजनं जनेश्वरः ॥ ५३ ॥
अन्यासु संपत्तिषु संनिवृत्ता
वृता वरार्थं सुहृदः प्रसाद्य ॥

पुरेति । मूलकर्म तु कार्मणम् । सिंहासनं सिंहाकारमासनम्
'सिंहासनंतु तत् हैम'मित्यमरः ॥ ४९ ॥

मणीति । प्रतिफुल्ला प्रतिबिम्बिता ॥ ५० ॥

लीलेति । चामराल्य एव मरालाः हंसाः ॥ ५१ ॥

अनुक्रियाविशेषणम् ॥ आनकैः प्रथम निवेदितैः कुशी-
लवैः ॥ ५२ ॥ ५३ ॥

यया चिरं संपदमानतास्ते
तद्वत्सभावादधिकं न किञ्चित् ॥ ५४ ॥
अनुज्झिता स्थानकगर्भमानकै-
र्वनद्भिरारात्प्रथमं निवेदितैः ॥
अशेषसङ्गीतकलाविचक्षणैः
क्षणात्स भेजे कुशलैः कुशीलवैः ॥ ५५ ॥
ततेषु विज्ञैर्विततेषु कोविदै-
र्घनेषु रक्षैः सुषिरेषु सूरिभिः ॥
अवादि वाद्यं पुरतोस्य वादकै-
रमुक्तगेयैर्लयबन्धसुन्दरम् ॥ ५६ ॥
सकेतकदलं यथा चतुरनेत्रवीरैः सदः
सपत्ररचनं यया करतलाञ्चलैः शोभयन् ॥
सविद्युदिव गात्रकैः सकमलावलीवाञ्छिभि-
र्ननर्त्त ललितक्रियानिपुणलासकस्त्रीगणः ॥ ५७ ॥
सचन्द्रलेखश्चलहंसपक्षतिः
सपद्मकोशः शुकतुण्डभासुरः ॥
कराङ्गहारः सुदृशामशोभय-
त्तदा शरत्काल इव प्रभोः सभाम् ॥ ५८ ॥
स पूज्यानभिषेकान्ते स्वापतेयैरपूजयत् ॥
यथा ते संपदं प्रापुर्नराकिन्नरराजनम् ॥ ५९ ॥

॥ ५४ ॥ ५५ ॥

ततेति । विततेषु आनद्धादिषु 'ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकं सुषिरं कांस्यतालादिकं घनमि' त्यमरः। 'लयः साम्यमि 'ति च ॥ ५६ ॥

सतेति । 'नर्तकीलासिके समे' ॥ ५७ ॥

सचन्द्रेति । चन्द्रलेखहंसपक्षपद्मकोशशुकतुण्डा अङ्गहारविशेषाः शरीरसम्बन्धिनस्तु प्रसिद्धाः ॥ ५८ ॥

सपूज्येति । 'द्रव्यं वित्तं स्वापतेय'मित्यमरः ॥ ५९ ॥

सस्थूललक्षो बहुलक्षसंख्यैः
वनीपकौघानवनीपवर्यः ॥
धनैस्तदानीमधिनोदधिश्रीः
सस्यानि पाथोभिरिवाम्बुवाहः ॥ ६० ॥

र मा र सा सा र मा र
मा न ता न न ता न मा ॥
र ता ग मा मा ग ता र
सा न मा न न मा न सा ॥ ६१ ॥

सर्वतो भद्रः ॥

रम्या कल्पविलासिनी क्षितिपतेर्लावण्यतेजस्विनी
सत्याविष्कृतिमण्डना स्थितिमती याभीष्टलोकान्तर ॥
रक्षोराजिराभमतिमता जकंमाद्यं सुसेव्यं सदा
तत्तारं रमितानुजेन च शतानीकेन रामं तदा ॥ ६२ ॥

सस्थूलेति । 'स्युर्वदान्यस्थूललक्ष्यदानशौण्डाबहुप्रदे' इत्यमरः । अधिनोत् प्रीणयामास 'धिविप्रीणने' अधिश्रीपर्णसम्पत् ॥६०॥

रमेति । सा रमा लक्ष्मीः तं रामं युधिष्ठिरं च आर प्रापतमिति सामर्थ्याल्लभ्यते । सारमारं श्रेष्ठकामम् । आनता नम्रा सारस्य रामस्य मानं तनोतीति सा । तथोक्तेर्डः । न नतं नम्रमाननं मुखं मानसं च यस्याः । सर्वतोभद्रम् ' तदिष्टं सर्वतोभद्रं भ्रमणं यदि सर्वत इति ' कण्ठाभरणम् ॥ ६१ ॥

रम्येति । सुन्दरी अकल्पं विलसनशीलामित्थमाविष्कृतमण्डना । स्थितिर्मर्यादातद्वती अभीष्टलोकान्तरं सुखोदर्काम् । रमतानुजेनोपलक्षितं रामं दाशरथिं रमन्तेऽस्मिन्निति । युधिष्ठिरं च क्षितिपतेर्दशरथस्य पाण्डोश्च लक्ष्मीराश्रयते स्म । चक्रबन्धः। 'पुरः पुरोलिखेत्पादानत्र त्रीन्षडरीकृतान् । तुर्यं तद्भ्रमयेन्नेमौ

युग्मं चक्रबन्धः ॥

श्रुतचित्रकथस्तीर्थभूतात्कुंभभुवः कवेः ॥
स्वपुरप्राप्तये चक्रे राजा हरिविसर्जनम् ॥ ६३ ॥
श्रिया जुष्टः स भारत्या साधुवत्सलः ॥
पृथिवीं पालयामास कामदेव इवापरः ॥ ६४ ॥

इति श्रीहरचरणीप्रसूतकादम्बचक्रवर्त्तिकुलतिलकवीरकामदेवप्रोत्साहितकविराजपण्डितविरचिते राघवपाण्डवीये महाकाव्ये त्रयोदशःसर्गः समाप्तः ॥

नमाङ्कश्चक्रसंविधिरि' ति कण्ठाभरणात् । अत्रांकः कविराजकाव्यमिति ॥ ६२ ॥

श्रुतेति । तीर्थभूताद्गुरुरूपात्कुम्भभुवोगस्त्यात्कवेः सर्वज्ञात्कुम्भभुवो गङ्गायाः कवेर्भीष्माच्च स्वपुरं किष्किन्धां द्वारवतीं च । राजा रामो युधिष्ठिरश्च हरीणां सुग्रीवादीनां कृष्णस्य च ॥ ६२ ॥

श्रिया स रामो युधिष्ठिरश्च भरतप्रत्यर्पितया भरतकुलागतया च श्रिया सेवितः । अनुजाः लक्ष्मणादयो भीमादयश्च । कामदेवः स्मरः काव्यप्रयोजकश्च सभाः सशोभाः रत्यापत्याप्रीत्या च सा नुमर्दः शिखरमार्गान्यतरजः ' सानुः प्रस्थे तुषेमार्गे वात्यायां पल्लवे मद ' इतिविश्वः ॥ राजपक्षे सरस्वतीसहितया लक्ष्म्येति वा स्मरपक्षे सानुजः सवत्सः साधुषु वत्सलः तदनुमादकः राजपक्षे सावरजः साध्नोति त्रिवर्गं साधुः स चासौ वत्सलः स्निग्धश्चेति वा ॥ ६४ ॥

आवश्यकपदश्लेषण्याचिण्यासावशात्मनः ॥
लक्ष्मणस्यकृतौ सर्गः इत्ययासीत्त्रयोदशः ॥

आवश्यकश्लेषपदाशयैकविवक्षयातुक्षणमक्षिणयिम् ॥
श्रीलक्ष्मणो राघवपाण्डवीयं व्याचष्टविस्पष्टगभीरभावम् ॥१॥
उत्तमश्लोकपादाब्जरजोनिर्मृष्टचेतसः ॥
दत्तसूरिसुतस्यैषा कृतिरस्तु सतां मुदे ॥ २ ॥
प्रमादातिमरच्छन्नश्लेषाशयविशोधनीम् ॥
उपादध्यमपाकृत्यमत्सरंसारचन्द्रिकाम् ॥ ३ ॥
भास्वद्ब्रह्मज्ञानिवंशावतंसं श्रीमद्राजादत्तसूरिप्रसूतेः ॥
ह्यद्योविद्वल्लक्ष्मणस्य प्रयासो विश्वेशस्य प्रीतये शश्वदस्तु॥४

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणपरमहंसपरिव्राजकाचार्यश्रीमदुत्तमश्लोकतीर्थमहामुनिकृपाकटाक्षकवीक्षितब्रह्मज्ञानिवंशावतंसश्रीदत्तसूरिसुतलक्ष्मणपण्डितविरचितो राघवपाण्डवीयटीकासारचन्द्रिका समाप्ता ॥

—००—

मुद्रितमेतन्मुम्बय्यां गोपालनारायणजनतया स्वकीये मुद्रालये ।

